BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
G. THIBAUT, PH. D.
*No. 147.*

---

श्रीमद्भागवतदशमस्कन्धस्थभ्रमरगीतव्याख्या ।

# गूढार्थदीपिका ।

पण्डितवर—श्रीधनपतिसूरिकृता ।

श्रीमदाचार्यश्रीवल्लभाधीश्वर-श्रीविठ्ठलनाथदीक्षितशुद्धाद्वैत-
संप्रदायविदुषा रत्नगोपालभट्टेन परिशोधिता ।

# GÛDHÂRTHADÎPIKÂ,

A Commentary on Bhramaragîta
of the Tenth Chapter of Śrîmad Bhâgawata,
BY PANDITA DHANAPATI SÛRI;

EDITED BY RATNA GOPÂL BHATTA.

---

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book-Depot.*

Printed at the Vidyâ Vilâs Press
by Harikrishna Dasa.
BENARES.

1908.

# सूचीपत्रम् ।

| | रु० | आ० | पा० |
|---|---|---|---|
| गणपाठः … … … | ० | ५ | ० |
| गोलप्रकाशः … … … | २ | ४ | ० |
| गंगालहरी … … … | ० | १ | ० |
| गुरुसारणी … … … | ० | ४ | ० |
| जातकतत्त्वम् … … … | ० | १२ | ० |
| तत्त्वदीप … … … | ० | १ | ० |
| तर्कसंग्रहः … … … | ० | १ | ० |
| दत्तकमीमांसा … … … | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः … … … | ० | १ | ६ |
| धातुपाठः ( शिला -) ) … … | ० | २ | ० |
| धातुरूपावली ( शिला )॥। ) … … | ० | १ | ६ |
| परिभाषापाठः … … … | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता … … | ० | २ | ० |
| प्रथम परीक्षा … … … | ० | २ | ० |
| प्रथमपुस्तक हिन्दी … … … | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| फक्किकाप्रकाशः … … … | ० | ८ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| मनोरमा शब्दरत्नसहिता … … | ६ | ० | ० |
| मुहूर्तमार्तण्डः सटीकः … … | ० | ८ | ० |
| लघुकौमुदी टिप्पणीसहिता … … | ० | ३ | ० |
| लघुकौमुदीभाषाटीका (पं० मथुराप्रसादमिश्र कृत) ( टिप्पणीसहित ) | ४ | ० | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः … … … | ० | १ | ६ |
| विष्णु सहस्रनाम … … … | ० | १ | ० |
| व्याकरणकौमुदी (उपक्रमणिका का दूसरा भाग ) | १ | ० | ० |
| शब्दरूपावली … … … | ० | ० | ९ |
| शृङ्गार सप्तशती … … … | १ | ८ | ० |
| समासचक्रम् … … … | ० | १ | ० |
| समासचन्द्रिका … … … | ० | १ | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता … … | ० | ८ | ० |
| सिद्धान्तकौमुदी ( पं० वामनाचार्येण संशोधिता ) | १ | ८ | ० |
| ~~सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता~~ | २ | ० | ० |
| उपसर्गवृत्ति … … … | ० | १ | ० |
| क्षेत्रकौमुदी … … … | ० | ६ | ० |
| क्षेत्रसंहिता … … … | १ | ० | ० |

# BENARES SANSKRIT SERIES;

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

G. THIBAUT, PH. D.

*No. 147.*

---

श्रीमद्भागवतदशमस्कन्धस्थभ्रमरगीतव्याख्या ।

# गूढार्थदीपिका ।

पण्डितवर–श्रीधनपतिसूरिकृता ।

श्रीमदाचार्यश्रीवल्लभाधीश्वर–श्रीविठ्ठलनाथदीक्षितशुद्धाद्वैत-संप्रदायविदुषा रत्नगोपालभट्टेन परिशोधिता ।

GÛDHÂRTHADÎPIKÂ,

A Commentary on Bhramaragîta

of the Tenth Chapter of Ŝrîmad Bhâgawata,

BY PANDITA DHANAPATI SÛRI;

EDITED BY RATNA GOPÂL BHATTA.

---

BENARES:

*Published by the Proprietors Messrs. Braj B. Das & Co.*

AND SOLD BY H. D. GUPTA,

*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ Vilâs Press

by Harikrishna Dasa.

BENARES.

1908.

श्रीगणेशाय नमः

# अथ श्रीमद्भागवतीयदशमस्कन्धसप्तचत्वारिंशाऽध्यायात्मकभ्रमरगीतव्याख्या ।

## गूढार्थदीपिका ।

### श्रीधनपतिसूरिकृता ।

रमाकान्तमुमाकान्तमुखवन्द्यपदाऽम्बुजम् ॥
वन्दे प्रेमभराक्रान्तस्वान्ताश्च व्रजयोषितः ॥ १ ॥
सप्तचत्वारिंशकेऽथ गोपिकानां निरूप्यते ॥
उद्धवभ्रमराभ्यां तु संवादः श्रोतृमोददः ॥ २ ॥

अथ सूर्योदयानन्तरं स्वस्वगृहाद्बहिर्निःसृत्य शानकौम्भरथं व्रजद्वारि स्थितमवलोक्य कस्यायं रथ इति ब्रुवत्यः स्थिताः, ततो यमुनायां स्नात्वा समायान्तमुद्धवं दृष्ट्वा, कोऽयमित्यादिवदन्त्यस्तत्सन्निधौ गत्वा तं परिवव्रुरित्याह ।

श्रीशुक उवाच ।

तं वीक्ष्य कृष्णाऽनुचरं व्रजस्त्रियः
प्रलम्बबाहुं नवकञ्जलोचनम् ॥
पीताऽम्बरं पुष्करमालिनं लस-
न्मुखारविन्दं मणिमृष्टकुण्डलम् ॥ १ ॥

तमिति ॥ ननु स्त्रीणामेवंविधपुरुषं दृष्ट्वा लज्जयाऽपवरकान्तरवस्थानमुचितमित्याशङ्क्याह ॥ व्रजस्त्रियः ॥ नगरस्त्रीणामयं स्वभावो, न तु ग्राम्यस्त्रीणामिति भावः । ननु तथापि तासां भयात्ततः पलायनं साम्प्रतमित्यत आह ॥ कृष्णानुचरं व्रजाऽधीशकृष्णसखीनां कृष्णानुचरात् का वा भयसम्भावनेति भावः । ननु

तथाविधानां तासां यः कश्चित्तदनुचरोऽपि नानुसरणीय इत्याशङ्क्याह ॥ मलम्बेत्यादि ॥ प्रकर्षेण लम्बौ बाहू यस्य । नवीनपद्मवल्लोचने यस्य । पीतमम्बरं यस्य । कमलग्रथिता माला विद्यते अस्य । लसत् स्फुरत् मुखपद्मं यस्य । मणिभिर्मृष्टे उज्ज्वले कुण्डले यस्य । तथाच स्वस्वाम्यनुग्रहपात्रतया तद्दत्तवस्त्रभूषणादिधारी तदनुचरस्तदीयैरत्यर्थमादरणीयः । अयं तु तदवयवसमानावयवधार्यपीति परममहान् भवतीत्यतोऽस्यानुसरणे नास्ति कश्चिद्दोष इत्याशयः । प्रियविरहव्याकुलमनसां तेन यत्किञ्चित्सादृश्यवानप्यादरणीयो भवति । अयं त्ववयववस्त्रभूषणैः प्रियसदृशत्वात् तत्तत्प्रियावयवजनिततत्तत्सुखस्मारकतया परमादरविषय इत्यपि ध्वनितम् ॥ १ ॥

तद्दर्शनेन तासां महान् संभ्रमो जात इत्याह ।

> शुचिस्मितः कोऽयमपीच्यदर्शनः
> कुतश्च कस्याच्युतवेषभूषणः ॥
> इति स्म सर्वाः परिवव्रुरुत्सुका-
> स्तमुत्तमश्लोकपदाऽम्बुजाश्रयम् ॥ २ ॥

शुचीति ॥ अपीच्यं सुन्दरमवयवदर्शनं यस्य । अच्युतवद् वेषः पीताम्बरादिभूषणानि कुण्डलादीनि यस्येति पूर्वश्लोकोक्तविशेषणविशिष्टत्वेन दृष्टस्यानुवादः । तथाचैवंविधस्य गोकुले अदृष्टचरत्वाद् अक्रूरस्य चानीदृशत्वात् कोऽयमिति जिज्ञासा । चतुराशिरोमणिभूता काचिदस्तिचेन्निश्चित्य वदत्वित्यभिप्रायः । नन्वपीच्यदर्शने पीतपटाद्यलंकृते दामोदरे आसक्तचित्ता एता व्रजाऽङ्गनास्तथाभूते मय्यप्यासक्ता भविष्यन्तीति दुराशया तादृशविग्रहवेषादिकं विधाय कश्चित् कामुकोऽयं समागतः, किं वा प्रिय-

तुल्यविग्रहादिमन्तं मां दृष्ट्वा गोपिका बहु धनं दास्यन्तीत्याशया तत्सदृशो भूत्वा कश्चिल्लुब्धोऽयमागत इत्याशङ्क्याहुः ॥ शुचि कामलोभादिदोषविनिर्मुक्तं शुद्धं स्मितं यस्य । तथाच परमसज्जनत्वान्नायमुक्ततर्कगोचर इति भावः । अत एवम्भूतोऽयं कः किंजातीयः, किन्नामधेयः । किञ्च, कुतः कस्माद्देशादयमागतः । किं स्वाकारादिसदृशाकारादिकमेनं विधायास्मत्प्रियेणैवायं प्रेषितत्वात् तत्सकाशादागतः । किं वा स्वत एव स्वगृहादागतः । किञ्च कस्याऽयं पुत्रः पौत्रो वा । विशिष्टसंबन्धं ज्ञात्वा प्रीत्यतिशयस्य विधीयमानत्वात् संबन्धज्ञानमप्युचितमिति भावः । इति संशयव्याकुलमानसास्तन्निरासार्थमुत्सुकाः प्रियसादृश्यदर्शनेन तदीय एवायं कदाचित् स्यादिति तन्निश्चये उत्कण्ठितचित्ताः सर्वाः व्रजस्त्रियस्तं सर्वतो वेष्टयामासुः । उत्सुकानामप्येवंविधसंशयाक्रान्तचेतसां दूतीद्वारा निर्णयं कृत्वा तत्सान्निधौ गत्वा तत्परिवेष्टनमुचितमित्याशङ्क्याह ॥ उत्तमेति ॥ उत्तमः श्लोको यस्य तस्य भगवतः पादकमलमेवाश्रयो यस्य तम् । तथाच भगवत्पादपद्माऽऽश्रयणस्य सर्वाकर्षणकारणस्य तस्मिन् वर्तमानत्वात् तदङ्घ्रिसरोरुहाश्रयाणां तदीयानां लवमात्रविलम्बसहनाक्षमाणां तासामाकर्षणे को विस्मय इति भावः ॥ २ ॥

अथ परिवेष्टनानन्तरं स्वबुद्ध्यैव तं प्रियसंदेशहरं ज्ञात्वा सत्कृत्य पप्रच्छुरित्याह ।

तं प्रश्रयेणावनताः सुसत्कृतं
सव्रीडहासेक्षणसूनृतादिभिः ॥
रहस्यपृच्छन्नुपविष्टमासने
विज्ञाय सन्देशहरं रमापतेः ॥ ३ ॥

तमिति ॥ प्रियदूतत्वात् सव्रीडहासादिभिरयं सत्काराई इति तैः सुसत्कृतम् । सव्रीडहासपूर्वकमीक्षणं, सूनृतानि प्रियवचनानि कुशलप्रश्नाद्यात्मकानि ॥ आदिपदेनासनपुष्पाद्युपचारसंग्रहः । तैः सुसत्कृतम् । क्व स्थितमित्यपेक्षायामाह ॥ रहसि ॥ एकान्ते रसाविर्भावाय नन्दादिगुरुषमात्रदृष्टयगोचरे स्थाने, सम्यग्वस्त्रादिभिर्निर्मिते कोमले आसने उपविष्टम् । अव्याकुलतया स्वसन्निधौ निषण्णं तमुद्धवं प्रश्रयेण प्रेम्णा नम्राः सत्यः अपृच्छन् । निष्कामस्यास्यास्मत्कृतसत्कृतिग्रहणमस्माभिः सहावस्थानं वाऽस्मदर्थमेवातोऽयं प्रश्रयेण नम्रीभूय प्रष्टव्य इति भावः । ननु प्रियसंदेशहारक इति किमिति ज्ञातवत्यो, न त्वस्मदाकारणार्थमागत इत्यत उक्तं– रमापतेरिति ॥ इदानीं रमया लक्ष्म्या रमाभिः रामाभिर्नागरस्त्रीभिश्च सह वर्तमानस्य तस्यास्मदपेक्षाराहित्यादप्रयोजकानामस्माकमाकारणं नं घटते, किन्तु माद्विरहव्याकुलचित्तानां मरणं भवेच्चेत् तर्हि मम पापं स्यादिति तद्भयेनाऽस्मदनुरञ्जनहेतुसंदेशदानार्थमेवायं प्रेषित इति ज्ञातवत्य इत्यर्थः ॥ ३ ॥

तं प्रियसन्देशहरं विज्ञाय स्वस्य उपेक्षणीयत्वमनुमाय प्रणयकोपाक्रान्तस्वान्तास्तदागमनमन्यथा वर्णयन्ति ।

जानीमस्त्वां यदुपतेः पार्षदं समुपागतम् ॥
भर्त्रेह प्रेषितः पित्रोर्भवान् प्रियचिकीर्षया ॥ ४ ॥

जानीम इतिं ॥ यदुपतेः पार्षदं, न तु गोपिकापतेः । तथाच त्यक्तगोपिकापतिभावस्य स्वीकृतयदुपतित्वस्यास्मदुपकाराय प्रवृत्तिरतिदुर्लभेति भावः । तस्य पार्षदः सभानायकोऽतिचतुरस्त्वमपि, यथा राजा तथा प्रजेति न्यायात् । तथाच वृथा सान्त्वनकुशलो विश्वास्यवचनोऽसीति भावः । एवम्भूतं त्वां सम्यगुपसमीपे

आगतं जानीमः । तत्र समीचीनवस्त्रेणाऽस्मत्समीपागमनेन च प्रियस्य तत्रत्यानां तदीयानां तत्र च कुशलमित्यपि विद्मः । ननु पराधीनस्य ममात्रागमनं भवतीभिः कथं ज्ञातमितिचेत् तत्राहुः ॥ भर्त्रेह भवान् प्रेषितः ॥ ननु भवतीभिरेव तस्मिन् स्वपतित्वं त्यक्तम् । अस्मत्पतेरिति वक्तव्ये यदुपतेरिति विशेषणदानात् । स तु स्वात्मानं गोपिकापतिमेव मन्यते इत्याशङ्कानिवृत्त्यर्थं- भर्त्रेति पदम् । तेनैवास्मद्भर्तृत्वं विहाय यदुपतित्वमुररीकृतं, न त्वस्माभिस्तत् त्यक्तम् । यथापूर्वमवस्थानादिति भावः । यदुपतित्वमस्मद्भर्तृत्वं च तस्यैव विरुद्धमुत्कृष्टजातिनिविष्टत्वाद्, न त्वस्माकम् । निकृष्टत्वादित्यप्यनेन ध्वनितम् । अन्यत्र क्वचित् प्रेषितः प्रसङ्गादिह समागत इति सर्वथाऽन्यथाकरणस्य मिथ्याभाषणे पर्यवसानमभिप्रेत्येहेत्युक्तम् । नन्विह प्रेषणं जानतीनां तदुपरि दोषारोपणमनुचितं, परमप्रियाणां भवतीनां प्रियसम्पादनस्यैवात्र मत्प्रेषणप्रयोजनत्वादित्याशङ्क्याहुः ॥ पित्रोरिति ॥ नन्दयशोदयोः प्रियचिकीर्षया, न त्वस्माकम् । पित्रोर्हि पुत्रास्तित्वतदैश्वर्यश्रवणेनापि सुखं भवतीति तत्सुखार्थम् । अलङ्कृतत्वात्तदैश्वर्यकुशलताबोधको भवान् प्रेषितो, न त्वस्मत्सुखार्थम् । तत्वता सुखासिद्धेरित्याशयेन भवानित्युक्तम् । अस्मत्प्रियचिकीर्षा तस्य स्याच्चेत्तदालङ्कृतां काञ्चिद् दूतीं प्रेषयन्न तु राजकार्यकुशलं दूतं भवन्तमित्यपि ध्वनितम् ॥ ४ ॥

ननु दूतीप्रेषणे तयोः सन्तोषो न भवेदतोऽर्थात् सोऽपि भवत्वित्याशयेन भवतीनामेव प्रियचिकीर्षया युष्मद्भर्त्राऽहं प्रेषितो, भवत्यस्तु वृथैवान्यथा वर्णयन्त्यः क्लिश्यन्तीत्याशङ्क्याहुः ।

अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे ॥

स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यजः ॥ ५ ॥

अन्यथेति ॥ पितरौ विना तस्य यदुपतेः गोत्रजे स्मरणवि-षयं न पश्यामो यदर्थं भवादृशं प्रेषयेत् । त्यक्तगोपालत्वस्य भाग्यवद्राधिपत्यस्यानुपयुक्तत्वाद् गोगोपादिकमपि पशुपालादिस्थितियोग्य स्थाते स्मरणीयं न चक्ष्महे । अस्माकं तु स्मरणप्रसक्ति-रेव नास्तीत्याशयः । अन्यथाऽस्मद्गृहानागत्यैकत्र स्थित्वाऽस्मान् आहूय प्रियसंदेशानुक्त्वा पश्चान्नन्दरायगृहे प्रवेशस्त्वया कृतः स्याद्. न तु तथा कृतवानसि, किन्तु स्वत एवास्माभिरागत्य परि-वेष्टितोऽस्यतोऽस्मत्तर्को यथार्थ एवेति भावः । नन्वनुपेक्षणीयत्वरू-पहेतोः पित्रोरपि तुल्यत्वात् तत्स्मरणं तत्प्रियार्थं दूतप्रेषणादिकं चापि न संभवतीत्याशङ्क्याहुः ॥ स्नेहेति ॥ स्नेहेनानुबन्धो बन्धनं, स्नेहेनानुबन्धो यस्य स स्नेहग्रन्थिर्वा बन्धूनां मातापित्रादिसंब-न्धिनां सबन्धो मुनेस्तत्त्वविदोऽपि अत्यर्थं दुस्त्यजस्त्यक्तुमशक्यः । नन्वुक्तहेतुर्भवतीष्वपि समान इत्याशङ्कानिवृत्त्यर्थं बन्धूनामित्युक्त-म् । स्नेहमात्रं चेत् कदाचित् त्यक्तुमपि शक्येत । परस्परस्नेह-कृततद्ग्रन्थिस्तु यथोक्त एवेति बोधयितुमनुबन्धपदोपादानम् । सम्बन्धेन सहजातस्य स्नेहस्य सम्बन्धनिवृत्त्यैव निवृत्तिर्भवति । औपाधिकभ्रमस्य यावदुपाधिसत्त्वनियमात् । अत एव तत्त्वविदाम-पि यावद्देहस्तावत्तत्र स्नेहानुवृत्तिरुपलभ्यते । यो मुनेरपि दुष्प-रिहारः स विषयिभिः कथं परिहर्तुं शक्य इत्यपिशब्देन बोधित-म् । यथा चास्मदादिषु तस्य यावत्प्रयोजनमपेक्षाबुद्धिरासीत्, सा च तदभावान्निवृत्ताऽतो नान्यस्य स्मरणादियोग्यता । नन्दराय-माहात्म्यात् तद्व्रजसम्बन्धिनां सर्वेषामपि तेन स्मरणं क्रियते चे-त्तर्हि पराङ्गतया स्मरणादिकं, नास्माकं सन्तोषकरमुत्कर्षानापा-दकत्वादिति भावः ॥ ५ ॥

क्लृप्तमेवैतन्न तु वयमपूर्वं कल्पयाम इत्याशयेनाहुः ।

अन्येष्वर्थकृता मैत्री यावदर्थविडम्बनम् ॥
पुंभिः स्त्रीषु कृता यद्वत् सुमनःस्विव षट्पदैः ॥ ६ ॥

अन्येष्विति ॥ अन्येषु देहसंबन्धरहितेषु अर्थकृता प्रयोजनोपाधिका मित्रता यावदर्थविडम्बनम् अनुकरणमात्रं, न तु स्वाभाविकी । अतोऽर्थनिवृत्त्या न तिष्ठति । अस्मासु तु भगवत्स्नेहः कदापि न स्थितः, किन्तु तदनुकरणमात्रं स्थितमतो नाऽस्माकं स्मरणादियोग्यतेत्याशयः। तदुदाहरणान्यावेदयन्ति ॥ पुंभिरिति ॥ तद् यथा पुंभिः स्त्रीषु कृता मैत्री कामबाधानिवृत्तिरूपार्थपर्यन्तं विडम्बनमात्रम् । स्वतन्त्राः सर्वसमर्थाः पुमांसः अबलासु स्त्रीषु कामादेव स्नेहं कुर्वन्ति । अन्यथा सिद्धे निवृत्ते वा कामे तदभावदर्शनात् । यदहरेव विरजेत् तदहरेव प्रव्रजेदिति श्रुत्या तद्रहितस्य संन्यासविधानाच्च । ननु तत्रौपाधिकोऽपि स्नेहः कदाचित् पुत्राद्युत्पत्त्या तद्द्वारा सहजोऽपि भवतीत्यरुच्योदाहरणान्तरमाहुः ॥ सुमनःस्विति ॥ यथा वा षट्पदैः कृता पुष्पेषु मैत्री मकरन्दग्रहणपर्यन्तं विडम्बनमात्रं तत्र मकरन्दाभावान्निवर्तते । झटित्यन्यत्र गमनक्रियाबाहुल्यसूचनार्थं षट्पदप्रयोगः ॥ ६ ॥

ईर्ष्यावशात् पुरुषाणामेव दूषणोद्घाटनमेताभिरारब्धमित्याशङ्कानिरासार्थमाहुः ॥

निःस्वं त्यजन्ति गणिका अकल्पं नृपतिं प्रजाः ॥
अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम् ॥ ७ ॥
खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम् ॥
दग्धं मृगास्तथारण्यं जारो भुक्त्वा रतां स्त्रियम् ॥८॥

निःस्वमिति ॥ गणिका वाराङ्गनाः लोकद्वयभयनिर्मुक्ताः परममैत्रीं विडम्बयन्त्यो धनवन्तं पुरुषं भजन्ते । तस्य निर्धनतादशायां तं त्यजन्ति । तथाचार्थकृता मैत्री स्त्रीष्वपि कृत्रिमैवातो न वयम् ईर्ष्यावशात् पुरुषेषु दोषमारोपयाम इति भावः । एवञ्चास्मदुक्तनियमस्य नाऽस्ति काऽपि भङ्ग इत्याशयेनोदाहरणान्तराण्याहुः ॥ अकल्पमिति ॥ पूर्वं सर्वभावेन पाल्यमानाः स्वयं च सर्वभावेन तद्भजनयुक्ताः प्रजाः, पश्चात् तमेव परम्परागतं राजानं पालनाशक्तं त्यजन्ति । पालनक्षमं तच्छत्रुं भजन्तीति प्रसिद्धम् । अधीता विद्या यैस्ते शिष्याः, उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः * सरहस्यं तदङ्गं च तमाचार्यं प्रचक्षत इत्युक्तरूपं सर्वपुरुषार्थहेतुभूतविद्याप्रदातृत्वात् परमोपकारिणमाचार्यं त्यजन्ति यथा वा, दत्ता दक्षिणा येन तं याज्यम् ऋत्विजस्त्यजन्ति । कदाचिद् अदत्ता दक्षिणा येन तं, तत्समीपमपि न गच्छन्तीति वा । एतेन मूर्खाणामेवेयं कथा, न पण्डितानामित्याशङ्काऽपि परिहृता ॥ ७ ॥

तथा खगाः पक्षिणः क्षुत्पीडिताः फलवन्तं वृक्षं सेवमानास्तदपगमे तं त्यजन्ति । छायाद्यर्थिनस्तद्रहितमित्यस्यापीदमुपलक्षणम् । तथा अतिथय असंबन्धिनो ब्राह्मणादयः क्षुत्पीडिताः भुक्त्वा, चकारादन्यदपि सत्कारादिकं लब्ध्वा भोजनादिदातृगृहं त्यजन्ति । तद्गृहे कस्मिंश्चिद् दाहादिरूपोपद्रवेऽपि जाते तदवलोकनमप्यकुर्वन्तो गच्छन्ति । तथा यस्मिन् वने उत्पन्ना वृद्धिं च गतास्तादृशमपि वनमुपयोगाभावात् त्यजन्ति । न तावदेक एव कश्चिदेवं करोति, किन्तु सर्वे एवंविधा इति सूचयितुं सर्वत्र बहुवचनप्रयोगः । तथा रतां स्वपतिपुत्रादिकं परित्यज्य स्वास्मिन्नेवात्यर्थमनुरागवतीं भुक्त्वा स्वकार्यार्थं तदीयं लोकद्वयमपि नाशयित्वा

अतृप्तामेव स्त्रियं जारस्त्यजति । एवंविधः कश्चिदेवास्मत्प्रियसदृश इति ध्वनयितुं जार इत्येकवचनम् । इतः परमुदाहरणान्तरानुपादानमेतस्य कृतघ्नशिरोमणित्वख्यापनार्थम् ॥ ८ ॥

इयं चेर्ष्या तासां विरहव्याकुलचेतसां प्रणयकोपनिबन्धना, न तु द्वेषनिबन्धनाऽतस्तदुपदेशार्थं भृत्यप्रेषणं भगवत उचितमित्याशयेनाह ।

इति गोप्यो हि गोविन्दे गतवाक्कायमानसाः ॥
कृष्णदूते व्रजं याते उद्धवे त्यक्तलौकिकाः ॥ ९ ॥

इतीति ॥ गोप्य इत्यपृच्छन्निति पूर्वक्रियया अन्वयः । इति वदन्त्य एवम्भूता जाता इति वा । ननु प्रणयकोपवतीनामप्यत्युपालम्भो न युक्त इत्याशङ्कानिरासार्थं गोप्य इत्युक्तम् । तथा च कापट्यविवेकहीनानां मुग्धानामियमुक्तिर्न दौष्ट्यमूलेति भावः । तासां दुष्टत्वे तु तत्पतित्वसिद्ध्यर्थं गवामिन्द्रत्वेनेन्द्रादिभिर्भगवान्नाभिषिक्तः स्यादिति सूचयितुं गोविन्दपदप्रयोगः । यद्वा, यो यद्रक्षणार्थं सप्तदिनपर्यन्तं गोवर्द्धनं धृतवाँस्तेन च गवामिन्द्रत्वं प्राप्य गोविन्देति संज्ञामवाप्तवान् । स च विरहानलज्वालासु ता निक्षिप्य यर्ह्युपेक्ष्येत तर्हि तासामियमुक्तिर्नायुक्तेति ध्वनयितुं गोप्यो गोविन्द इत्युक्तम्।किञ्च प्रियगतवागादिव्यापाराणामुपालम्भात्मक–व्यापारोऽपि तत्रैवोचित इत्याशयेनाह ॥ गतेति ॥ अत एव कृष्णदूते व्रजं प्राप्ते सति त्यक्तं लौकिकं गृहकृत्यादिकं याभिस्ताः । प्रियदूतसमागमनाद् यासामेवंभूता दशा जाता तासां प्रियसमागमनसंभाविता दशा तु वाचामप्यगोचर इति भावः । कृष्णेन मन आकृष्य गतेनास्मत्स्वामिना वयं स्मृता, यतोऽस्मद्व्रजे तेन स्वदूतः प्रेषितस्तस्माद् यावत्कालमस्यात्रावस्थानं तावत्कालं

सर्वं लौकिकं विहायास्माकमवस्थितिरेतत्सन्निधावेव न्याय्येति विचार्य तथाभूता जाता इत्यर्थः ॥ ९ ॥

गायन्त्यः प्रियकर्माणि रुदत्यश्च गतह्रियः ॥
तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः ॥१०॥

किञ्च तस्य यानि कैशोरबाल्ययोरवस्थयोः सम्बन्धीनि प्रियकर्माणि तानि संस्मृत्य संस्मृत्य गायन्त्यो रुदत्यश्च गतह्रियो जाताः। गायन्त्यो रुदत्यो, गतह्रियश्च पूर्वश्लोकोक्तस्वरूपा जाता इति वा । गायन्त्य इति तासां वाग्व्यापारस्य, रुदत्य इति कायव्यापारस्य, संस्मृत्येति मनोव्यापारस्य भगवद्गतत्वं बोधितम् । त्यक्तलज्जा इत्यनेनासाधारणधर्मोऽपि याभिस्त्यक्तस्तासु किमवशिष्यत इति सूचितम् । स्मरणधाराबोधनार्थं संस्मृत्यपदावृत्तिः । तथाचाऽनुक्षणं सर्वभावेन तासां तत्परत्वमित्यर्थः ॥ १० ॥

गोपिकासमुदायदत्तोपालम्भैः परितोषमलभमानायाः परममानवत्याः श्रीवृषभानुनन्दिन्या ह्लादिन्याः शक्तेर्वृत्तमावेदयति ।

काचिन्मधुकरं दृष्ट्वा ध्यायन्ती कृष्णसङ्गमम् ॥
प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत् ॥ ११ ॥

काचिदिति ॥ काचित् कृष्णसंगमं ध्यायन्ती मधुकरं दृष्टवती । दृष्ट्वा च तं, प्रियेण मां प्रति पृथक् प्रस्थापितोऽयं दूत इति कल्पयित्वा इदं वक्ष्यमाणमब्रवीत् । मधुकरस्तु कश्चिदकस्मात् सौरभ्यलोभात् तत्र समागतः। भगवतैववा प्रेयस्याः प्रेमातिरेकमुद्धवाय दर्शयितुं चरः प्रेषितः। स्वयमेव प्रेयस्याश्चित्रजल्पमाधुरीपिपासया तद्रूपेण समागत इति वा। कृष्णसङ्गमं ध्यायन्ती, मनसा कृष्णसङ्गमं लब्धवती, पूर्वं प्राप्तं कृष्णसङ्गमं स्मरन्तीति वा । प्रियसङ्गमः कदा भविष्यतीति विलपन्तीति वा । यद्वा नागरस्त्रीणां प्रियेण सार्द्ध-

मिदानीं संगमोऽस्तीति चिन्तयन्ती, मम परितोषायेयं न समीचीनेति कोपनिवृत्त्यर्थं वाऽयं दूतः प्रेषित इति कल्पयित्वोवाच । तद्दूतव्याजेनोद्धवं प्रत्येवोक्तवतीति वा । मधुपे मधुकरशब्दप्रवृत्तिस्तु तेनैव स्वपानार्थं प्राचीनकर्मणा मधु कृतम् । स्वकृतमेव सर्वोऽपि भुङ्क्ते इति प्रसिद्धेरित्यभिप्रायेण, मधुकृन्तनाद्वा ॥ ११ ॥

पादसरोजसौरभलोभात्तत्समीपमागतं तं प्रियशिक्षितोऽयं मां प्रसादयितुं मदङ्घ्रिं स्पृशतीति कल्पयित्वा प्रजल्पति ।

मधुप कितव बन्धो मा स्पृशाङ्घ्रिं सपत्न्याः
कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः ॥
वहतु मधुपतिस्तन्मानिनीनां प्रसादं
यदुसदसि बिडम्ब्यं यस्य दूतस्त्वमीदृक् ॥ १२ ॥

मधुपेति ॥ हे मधुप, नोऽस्माकमङ्घ्रिं चरणसरोजं मा स्पृश मधुपत्वात् स्पृशन् अङ्घ्रिसरोरुहमकरन्दमपि पास्यसीति मदङ्घ्रिर्निःसारो भविष्यति । तत्रत्यप्रेयस्या रममाणेन मदागमनभयान्मदङ्घ्रिभङ्गार्थं त्वं प्रेषितो, न स्पर्शार्थमिति तव दौष्ट्यं मया बुद्धमतस्तत्र गत्वा स्वस्वामिनं प्रति ब्रूहि— भो भगवन् ! सा वदति, मया कदापि तत्र नागम्यते। यथेष्टं रमतु तत्र स्वामी, किमर्थं स्पर्शव्याजेन मदङ्घ्रिभङ्गार्थं त्वं प्रेषितः । अन्यथाऽन्यमेव प्रेषयेदितीति संबोधनाशयः । यद्वा, मधु पुष्परसे मद्य इति कोशाद्, हे मद्यप, तव स्पर्शोऽपवित्रतासंपादकोऽतस्तवात्यन्तं भक्तिरस्तिचेत् तर्हि दूरे स्थित्वा नमस्कारं कुर्विति भावः । ननु भवतीं प्रति त्वत्प्रियेणाऽहं प्रेषितो, भगवतोऽत्यर्थं प्रियायाश्चरणस्पर्शेनात्मानं कृतार्थीकर्त्तुमिच्छामि, किमिति महापातकित्वेन मामुत्प्रेक्षस इति चेत् तत्राह ॥ हे कितवबन्धो, कितवस्य, न पारयेऽहं निरवद्यसंयुजाम् *

इत्युक्त्वाऽपि परित्यज्य गतत्वाद्वञ्चकस्य श्रीकृष्णस्य बन्धो । स च मधून् पातीति मधुपस्त्वं च मधुप इति नामैक्याद् वर्णसाम्याद् वञ्चकत्वरूपधर्मसादृश्यान्मधुपतिधूर्तयोः सख्यावश्यम्भावाच्च तद्वन्मुग्धस्त्वं च । तस्मान्न मया त्वयि दोष आरोप्यतेऽपि तु यथार्थमेवाभिधीयतेऽतस्त्वं न केवलं मद्यपः, किन्तु शठबन्धुरपीति सर्वथा त्वं दोषविनिर्मुक्तत्वात् परमपवित्राभिरस्माभिरस्पृश्योऽसीति भावः । किञ्च, तेनाप्यागत्यास्मदङ्घ्रिसमीपे चिरं पतितेनाप्यस्मद्दुःखमपनेतुमशक्यं, त्वद्विधेन दूतमात्रेण क्रियमाणचरणस्पर्शमात्रेण दुःखापनयस्य का प्रत्याशेति निष्फलमिदं कर्म नानुष्ठेयमित्यपि चरणस्पर्शनिषेधेन ध्वनितम् । ननु भो मातर्दूरे स्थित्वैव श्मश्रुभिरेवाहं त्वदङ्घ्रिस्पर्शं करिष्यामि, तेन च स्वस्वाम्याज्ञापालनं स्वपापापाकरणं च मम सेत्स्यतीत्याशङ्क्य ससंभ्रममाह ॥ श्मश्रुभिस्तु सर्वथा मा स्पृश । किमर्थमित्यपेक्षायामाह ॥ सपत्न्या इति ॥ ययेदानीं रमते तस्याः कुचाभ्यां विलुलिता विमर्दिता या श्रीकृष्णवनमाला, कुचयोः कृष्णवदनसंघर्षेण मर्दिता या मालेति वा, तत्संबन्धि कुङ्कुमं येषु तैः । तथाच स्पर्शमात्रेण दहनक्षमविसंपृक्तश्मश्रुभिः स्पृष्ट्वा चरणमारणमारभ्य शिखापर्यन्तं दग्धुं समागतोऽस्यतः कृपया दूरे तिष्ठेत्याशयः । यद्वा, ननु मयि मद्यपता, मत्स्वामिनि कितवता च श्रीमत्या त्वया कथमवधारितेत्यपेक्षायामाह ॥ सपत्न्या इति ॥ तथाचास्मत्कोपोद्दीपकतादृशकुङ्कुमवद्भिरेव, न तु प्रक्षालितैः श्मश्रुभिरस्मत्कोपनिवृत्त्यर्थमस्मच्चरणं स्प्रष्टुं तवागमनमेव विवेकशून्यस्य तव मद्यपत्वं बोधयति । तव स्वाम्यपि यदि साधुः स्यात् तर्हि तत्र गत्वा उदासीनतया तिष्ठेत् तदनुरोधेन तदालिङ्गनमात्रं वा कुर्यान्न तु तथा तेन कृतं, किन्त्वतिसौरतं कृत्वा भ्रान्तो वर्तते, भ्रान्तत्वादेव विवेकोऽपि तस्य न-

ष्टवत् प्रतिभाति । यतस्त्वादृशं मद्यपं प्रेषितवान् । नापि श्मश्रुप्र-
क्षालनादि कृत्वा समाहितो भूत्वा गन्तव्यमिति शिक्षितवान् । अत
एव तत्कापट्यमस्माभिर्ज्ञातमिति तच्चेष्टा तस्य कितवत्वं ज्ञापय-
ति । यद्वा मधुपश्चाऽसौ कितवश्च तस्य बन्धो । मधवो यादवा-
स्तत्पतित्वान्मधुपस्तेषां प्रायेण मद्यपत्वाद् अयमपि यादवत्वाद्वा,
तदर्थं मद्यपालकत्वाद्वा, प्रियाधराऽमृतलक्षणमधुपानकर्तृत्वाद्वा म-
धुपः । त्वमपि तच्छिष्यभूतो मधुपानादिकर्मानुष्ठानक्षमो, न तु
विवेकसाध्यं दौत्यं कर्तुं योग्यस्तस्माद् गुरुसमीपं गत्वा मधुरक्षणा-
दिरूपायां तत्सेवायामेव सर्वदा तिष्ठ, न तु तथाभूतश्मश्रुप्रदर्श-
नेन तदपकीर्तिं लोके प्रसारयेत्याशयः । विप्रलम्भे शृङ्गाररसे
दूतनायकयोरुभयोर्दूषणं तत्पोषकत्वादृसशास्त्रानुगुणम् ।

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ॥
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकमित्यादौ

तथादर्शनात् । सपत्न्या इत्येकवचनस्य, न इति बहुवचनस्य चाभिधा-
नेन स्वस्य तदपेक्षयोत्कृष्टता ध्वनिता । तस्य श्मश्रुलौहित्ये कु-
ङ्कुमसंबन्धाल्लौहित्यमिति तदारोपः । नन्वेवं चेत् संप्रत्यहं मथुरां
प्रति गच्छामि । स्वयमेव श्रीयशोदानन्दनः समुपागत्य त्वां प्रसाद-
यिष्यतीति चेत् तत्राह ॥ वहत्विति ॥ मधूनां यादवविशेषाणां
मधुदेशस्य वा पतिः मधु मानिनीनां प्रसादं वहतु ताः प्रसन्नाः करो-
तु । तथाच भाग्यवशाल्लब्धमधुपतित्वस्य तन्मानिनीनां प्रसादन एवा-
स्ति संप्रत्यधिकारो, न तु निकृष्टानां गोपिकानामस्माकमतो मि-
थ्यैव ब्रवीषि स्वयमेवेत्यादि । तस्मात् संकोचमपि विहाय तासां
प्रसादं वहत्वित्यस्माभिरप्यनुज्ञायत इति भावः । तासां बाहुल्यात्

प्रसादेन एव तस्यायुर्गमिष्यति, अस्मत्प्रसादनायागन्तुं तस्याव-
काश एव दुर्लभ इति सूचयितुं मानिनीनामिति बहुवचनम् । यद्वा
बुद्धमस्माभिस्त्वदागमनकृत्यम् । श्मश्रुभिस्तादृशकुङ्कुमरूपं तन्मा-
निनीनां प्रसादं धृत्वाऽस्मभ्यं दातुमागतोऽसि । तस्य च मस्त-
के लापयितुमुचितस्य चरणे लापनं मद्यपस्य तवोन्मादविजृम्भि-
तम् । अस्माभिस्त्वेवंविधं वस्तु चरणेनापि न स्पृश्यते । गुरुदेव-
तातिरिक्तोपभुक्तैवंविधवस्तुधारणस्य निषिद्धत्वात् । अहो ना-
ऽस्ति तवापराधः, स एव धूर्ताऽधिराजोऽस्मदुपहासार्थं निषिद्ध-
वस्तुप्रदानाय त्वां प्रेषितवान् । त्वमपि मद्यपत्वाद्विवेकमकृत्वै-
वागतवान् । अतः कस्मादस्माँस्तत्र गमनार्थं प्रार्थयसि । तत्र ग-
तास्वप्यस्मासु प्रसादत्वेन परं कुङ्कुममेव दास्यति । अतिप्रिया-
य तुभ्यमपि तस्यैव प्रदानात् । तद्दापयितुमेव तथाविधश्मश्रुमतो
दूतस्य प्रेषणाच्च । अपरं कैतव्यं तस्य ज्ञातमस्माभिः । किं त-
दितिचेत् । शृणु । गाढसुरते श्रमापनोदनार्थं खलु वायुरपेक्षि-
तः । स च स्वाभाविकः सर्वतो निरुद्धे पुरे दुर्लभः । व्यजन-
वायुस्तु कर्तृसाध्यः । तत्कर्त्ता पुरुषस्तु त्वादृशोऽपि तत्र स्था-
तुमयोग्यस्तस्मात् पूर्वोपभुक्ताः तदर्थं दासीः कर्तुमाकारयतीति।
तच्च जन्मान्तरेऽप्यशक्यमिति । ननु स्वयमपि यं प्रसादं धारय-
ति तद्धारणे भवतीनां को दोष इतिचेत्तत्राह ॥ वहतु मधुप-
तिरिति ॥ मद्यपस्य तस्यैव तद्धारणं योग्यं, न त्वस्माकमिति
भावः । मद्यपत्वादेव, ममापकीर्तिर्भविष्यति, न तु तासां काचि-
द्धानिरित्यपि तेन न विचारितं, नापि यदुसभायामुपहासकरमि-
दं कर्मेति चेत्याशयेन प्रमादं विशिनष्टि ॥ यदुसदसि विडम्ब्य-
मुपहासास्पदम् । ननु तत्र केनैवंविधं कर्म ख्याप्यत इतिचेत्तत्रा-
ह ॥ यस्य दूतस्त्वम् । एतत्पर्यन्तं ख्यापनायागतेन त्वया सान्नि-

धाने कथं न ख्यापितं स्यादिति भावः । ननु तत्रावसराभावात् तूष्णीमेव मया स्थीयत इतिचेत्तत्राह ॥ ईदृग् ॥ एवंविधश्मश्रु-धारिणस्तव दर्शनमपि तस्याऽपकीर्तिकरमिति भावः ॥ ईदृक् मद्यपत्वात्स्पष्टसुरतचिह्नधारी, सोऽपि मद्यपोऽतः स्वसदृशस्त्वमेव दूतः कृतः । विवेकी कश्चित्तस्य हितैषी यदि भवेत् तर्ह्येवं बोध-येत्— भो व्रजराजकुमार किमिह स्वस्य यदूनां चापकीर्त्तिकरं क-र्म कर्तुं प्रवृत्तोऽसि, व्रज एव गत्वा रहसि स्वसखीभिरेव किमर्थं न रमसे इति इत्यप्यनेन ध्वनितम् । यदुसदसि प्रसादं वहतु, सर्वत्र विडम्ब्यमिति वा । एतदारभ्य दशभिः श्लोकैर्दशाङ्गश्चित्रजल्पो-ऽत्र मुनिना वर्णितः । तदङ्गानि तु प्रजल्पादीनि । तदुक्तं—

चित्रजल्पो दशाऽङ्गोऽयं प्रजल्पः परिजल्पितः ।
विजल्पोज्जल्पसञ्जल्पा अवजल्पोपजल्पितम् ॥
आजल्पः प्रतिजल्पश्च सुजल्पश्चेति कीर्तित, इति ॥

तत्र ।

असूयेर्ष्यामदयुजा योऽवधीरणमुद्रया ।
प्रियस्याकौशलोद्गारः प्रजल्पः स तु कीर्तित इत्युक्तं प्रथ-मपद्यमात्रपत्रे दर्शितम् । तत्र कितवेत्यसूया, सपत्न्या इतीर्ष्या, अङ्घ्रिं मा स्पृशेति मदः, वहत्वित्यवधीरणं, यदुसदसीत्यकौशलो-द्गार इति ॥ ॥ उद्धवपक्षे, हे मधुप मधुपते । भगवद्ध्यानपरां त-त्प्रियामवलोक्य तत्पादपद्मं द्रष्टुं नम्रीभूतं श्मश्रुभिर्मदङ्घ्रिं स्प-ष्टुमिच्छतीति प्रकल्प्य निषेधति ॥ मा स्पृशेति ॥ तिलकदानावसरे सम्प्रति वा श्मश्रुषु पतितान् कुङ्कुमकणानालक्ष्याह ॥ सपत्न्या इति ॥ समानमन्यत् ॥

रसशास्त्रानुरोधेनेत्थं वर्णयता मुनिना स्वशास्त्रसिद्धान्तोऽपि निरूपितः । गोपिकानां श्रुत्यवतारत्वात् । तथाहि । काचित् तत्त्वम-

स्यादिरूपा मुख्या श्रुतिर्मधुकरं स्वकर्मणामधुमदशतत्तद्विषयकर्त्तारं जीवात्मानं दृष्ट्वा करुणाक्रान्तस्वान्ता तस्य कृष्णसङ्गमं ध्यायन्ती, कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः * तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत इत्युक्तत्वात्, कृष्णेन सच्चिदानन्दस्वरूपेण परब्रह्मणा सङ्गमनभिन्नत्वं ध्यायन्ती तत्राभिप्रायवती प्रियेणानन्दात्मत्वात् परमप्रेमास्पदेन प्रस्थापितं प्रवेशितं दूतं कल्पयित्वेदं वक्ष्यमाणमब्रवीत्। जीवात्मनः प्रियप्रस्थापितत्वम्, अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति श्रुतिसिद्धम्। श्रुतिरूपनायिकासङ्गमानन्दानुभवार्थं ब्रह्मणो जीवात्मभावेन दूतत्वमवगन्तव्यम्। तथाच श्रुतिः- रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणायेति। इदं वक्ष्यमाणं वाक्यं प्रियप्रस्थापितं दूतं कल्पयित्वाऽब्रवीदित्यपि द्रष्टव्यम्। यदब्रवीत् तदुदाहरति ॥ हे मधुप, पातोदकमनुतुल्यविषयरसपानपरायण। यद्यपि त्वं कर्तृत्वभोक्तृत्वविनिर्मुक्तः सच्चिदानन्दघनस्तथापि यत्तत्कर्मादनर्थपरम्परां प्राप्तोऽसि तत्त्वं न जानास्यतोऽहं त्वां बोधयामीत्याशयेन ह ॥ हे कितवबन्धो, त्वत्त सत्तां प्राप्य त्वामेव तत्तद्विषयसुखरूपमधुलवान् प्रदर्श्य जन्ममरणादिलक्षणसंसारानलज्वालामालायां क्षेप्तुं प्रवृत्तत्वात् परमशठस्य चित्तस्य बन्धुः। तथाच तत्तादात्म्यात् त्वयि संसारो, न स्वत इति भावः। ननु संसारापादकाऽन्तःकरणतादात्म्याध्यासे को हेतुः, कथञ्च स्वस्वरूपप्राप्तिरितिचेत्तत्राह ॥ मा स्पृशेति ॥ वस्तुतः स त्रिगुणात्मकमायापतिः परमात्मैव त्वं, स्वपत्न्या मायाया, अङ्घ्रिं स्पृष्टवानसि तदधीनतया तत्पादमहारास्पदतां गतोऽसि, तेन चान्तःकरणाध्यासेन संसृतिमापन्नोऽसि। स्त्रीजितो यथा स्वामित्वं तिरोधाय कैङ्कर्यादिदुर्दशां भजते तद्वत्। सम्प्रति तव मोक्षेच्छास्ति चेत्तर्हि तदङ्घ्रिं मा स्पृशेत्यर्थः। तथाच

श्रुतिः—द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते * तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति । अजामेकां लोहितशुक्लकृष्णाम् । अजो ह्येको जुषमाणोऽनुशेत इत्याद्या । स्त्रीपुरुषादिदेहतादात्म्याध्यासमपि तच्चरणस्पर्शमाहात्म्यादेव प्राप्तोऽसीत्याशयेनाह ॥ कुचेति ॥ कुचाभ्यां तत्र स्फुरन्मालाकुङ्कुमाभ्यां श्मश्रुभिश्चोपलक्षितस्तदत्यन्तविलक्षणोऽपि एतत्संघातरूप एवाहमिति ज्ञातवानसीत्यर्थः । तर्हि तदधीनत्वनिवृत्तौ क उपाय इति चेत् तत्राह ॥ वहत्विति ॥ स मधुपतिर्भवांस्तन्मानिनीनां तत्प्रत्यगभिन्नं ब्रह्मैव प्रमाणं तात्त्विकमिति प्रतिपाद्यत्वेनास्ति यासां तासां, तत्त्वमस्यहं ब्रह्मास्मि, प्रज्ञानं ब्रह्मेत्यादिकानाम् । यद्वा तत्र प्रामाण्यवतीनां नोऽस्माकं प्रसादं वहतु प्रत्यगभिन्नं परमात्मानं मामेव सर्वाः श्रुतयः प्रतिपादयन्तीति सर्ववेदान्तवाक्यसमन्वयावधारणरूपं प्रसादं धारयतु । नन्वल्पज्ञस्य संसारिणो मम कथं समस्तश्रुतितात्पर्यविषयतेति चेत्तत्राह ॥ यदिति ॥ यद् यस्मात् सदेवासि । उशब्दोऽवधारणे । त्वय्यल्पज्ञत्वादेः, परमेश्वरे सर्वज्ञत्वादेर्मायिकत्वात् सच्चिदानन्दरूपस्त्वं, तत्स्वरूपं ब्रह्मैवासीत्यऽर्थः । प्रसादोऽपि न वास्तवोऽन्यथा द्वैतापत्तेरित्याशयेन प्रसादं विशिनष्टि ॥ विडम्बनमिति ॥ यथा तव जीवभावेन संसरणं विडम्बनमात्रं तथा स्वात्मबोधाय स्वास्मच्छ्रुतितात्पर्यावधारणमपि, यक्षानुरूपो बलिरिति न्यायादित्याशयेनाह ॥ यस्य दूतस्त्वमीदृक् ॥ यस्य सद्रूपस्य ब्रह्मणः स्वरूपभूतोऽपि त्वम् । ईदृक् अनुकरणमात्रेण दूतो, न वस्तुत इत्यर्थः ॥ १२ ॥

ननु मदन्यया प्रेयस्या मत्प्रियो मथुरायां रमत इति केन प्रमाणेन श्रीमत्या ज्ञातम् । प्रत्यक्षेणोतानुमानेन, किं वा शब्देन । नाद्यः । अयोग्यत्वात् । न द्वितीयः । धूलीपटले धूमभ्रमवत्

श्मश्रुनिष्ठस्वाभाविकलौहित्ये तादृशकुङ्कुमलौहित्यभ्रमात् । नं तृतीयः । अनाप्तवाक्यस्याऽप्रमाणत्वादयथार्थत्वादिनोऽनाप्तत्वात् । तस्मात् सर्वदा त्वत्सङ्गमध्यानपरे, स्वप्नेऽपि त्वदन्यस्त्रीसमागमरहिते,त्वद्विरहव्याकुलस्वान्ते,परमप्रेष्ठे श्री व्रजराजनन्दने परमभक्त्या भगवत्प्रियायाश्चरणसरोजं द्रष्टुं स्प्रष्टुं च तदाज्ञयाऽऽगते मयि च किमित्येवं दोषा आरोप्यन्त इतिचेत्तत्राह ।

> सकृदधरसुधां स्वां मोहिनीं पाययित्वा
> सुमनस इव सद्यस्तत्यजेऽस्मान् भवादृक् ॥
> परिचरति कथं तत्पादपद्मं तु पद्मा
> ह्यपि बत हृतचेता ह्युतमश्लोकजल्पैः ॥ १३ ॥

सकृदिति ॥ असकृत्पायनेऽपि तत्पेयाशाया अनिवृत्तत्वात् तदुपकारातिरोधानाय प्रवृत्तत्वाद्वा, सकृदित्युक्तम् । अधरसुधां सकृत् पाययित्वा सद्योऽस्मांस्तत्याज।उत्कृष्टवस्तुलाभनिश्चयं विना पूर्वसिद्धं वस्तु केनापि न त्यज्यते । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते इति न्यायात् । तथाच त्यागान्यथाऽनुपपत्त्येदं कल्प्यत इत्यर्थापत्तिप्रमाणेन मयेदं ज्ञातमिति भावः । ननु यः सुधां पाययित्वा गच्छति स किमुपालम्भविषयो भवति । पिपासितस्य जलमपि पाययित्वा यो गच्छति, कृतज्ञैः स सर्वदा स्तूयत एव, न तु निन्द्यत इत्यपि शङ्कानेन निरस्ता । शुष्ककाष्ठैर्यो दहति तदपेक्षया आर्द्रगोमयेन यो दहति सोऽसन्तदुःखप्रद इति न्यायोऽत्र घटते, न तु त्वदुक्तस्तथाच मरणेदुःखाननुभवात्, सुधां पाययित्वा गतो, न स्वस्मदुपकारार्थं तथा कृतवान्, येन तदस्तवनेऽस्माकमकृतज्ञतादोषः स्यादन्यथा पुनः पुनस्तत्पायनं कुर्यात्त्यागं च

न कुर्यादिति । अधरपदेन जातितोऽपि वयं भ्रंशिता इति ध्वनितम् । नन्वेवंविधा सुधा किमर्थं भवतीभिः पीत्याशङ्कानिवृत्त्यर्थं बलात्कारः सूचितः । ननु तदर्थं सन्तापो न कार्यस्तत्राहं गत्वेदं कथयिष्यामि । स च श्रुत्वैव तां सुधां कनकपात्रे निधाय प्रेषयिष्यति, यां पीत्वा तृप्ता भविष्यथेति चेत् तत्राह ॥ स्वां स्वेन दानं विना तदधररूपपात्रं विना च पातुमयोग्याम् । अधरावियोगे तु तस्याः सुधात्वमेव नश्येदिति भावः । नन्वलभ्यवस्तुनः स्पृहा न युक्तेति विचार्य स्वस्थचित्ता भवतेतिचेत्तत्राह ॥ मोहिनीं विवेकं नाशयित्वा दुरन्तलालसोत्पादिनीम् । ननु युष्माकं कञ्चिद्दोषं दृष्ट्वा तेन त्यागः कृतः स्यादित्याशङ्क्याह ॥ सुमनस इति ॥ सुमनस इवास्मान् स भवादृक् तत्याज । तथाच भ्रमरकर्तृकमालतीत्यागे यथा नास्ति तासां कश्चिद्दोषस्तथा साधुमनसां तत्समानामस्माकमपि । तथाच स्वस्थाने स्थितत्वाद्वयं मालतीसमाः, स तु अन्यत्र गतत्वाच्चञ्चलो भ्रमरसम इतीदं प्रत्यक्षमेव, न तु कल्पनेति भावः । अत एव सद्यस्तत्याज । एतेन, ननु भवतीभिः कुतो न धृत इत्याशङ्कापि परिहृता । यथा त्वं मालतीभिर्धर्तुमशक्यस्त्वद्वदतिचञ्चलस्यातिबलिष्ठस्य च तस्यास्माभिर्धर्तुमशक्यत्वात् । यद्यपि भ्रमरः पीत्वा गच्छति, भगवाँस्तु पाययित्वा गत इति वैषम्यं, तथापि तादृशत्यागे दृष्टान्ताभावव्यञ्जनार्थं त्यागमात्रे भ्रमरो दृष्टान्तीकृतः । तथाचाधरसुधासम्बन्धाज्जातिभ्रष्टानां, तदासक्तचित्तत्वाल्लौकिककृत्याऽयोग्यानां, विवेकनाशात् परलोकसाधनसम्पादनाक्षमाणां तेन गतत्वादालम्बनविधुराणां, न पूर्वसिद्धसामग्री, नापि प्रेष्टरतिरित्युभयतोभ्रष्टास्तेन वयं कृता इत्यस्मत्कृत उपालम्भो नेर्ष्यामूलकः, किन्तु यथार्थ एवेति त्वमेव पक्षपातं विहायेदं विचारयेति । यद्यपि परितोभ्रमणमधुरभाषणसहाव-

स्थानचुम्बनश्यामत्वादिना तत्सदृशत्वाद् भवादृगिति तद्दृष्टान्त-त्वेन भवानस्माभिरुपात्तस्तथापि तत्र तत्राल्परसप्राप्त्या बुभुक्षा-निवृत्त्यभावात् सुमनसस्त्यागे न भवानुपालम्भविषयः। मधुपतेस्तु सुधामयाधररसा रसास्वादापेक्षाविधुरस्य सुमनसामस्माकं त्यागेन दुःखदानमयुक्तमेवातो त्वयाऽपि तस्मिन् कितवे बन्धुना न विधे-येति भावः। ननु भगवान् सर्वाः प्रत्येवंविध एवातो नोपालम्भ-योग्यः, स्वभावस्य दुरतिक्रमणीयत्वादित्याशङ्क्याह ॥ पद्मा लक्ष्मीः परमचतुरा तत्पादकमलं कथं सेवतेऽन्यथा च तत्सेवां तत्सन्निधौ स्थित्वा गृह्णाति, अस्मांस्तु त्यजत्यतो नैकाकित्वभावोऽपि तु वञ्चनादि-दोषवानेव प्रत्यक्षेणोपलभ्यते। अश्वत्थशिरोमणिरपि तद्दूतस्त्वं तानपलपितुमशक्तोऽसीति भावः। नारायणसमो गुणैरिति गर्गो-क्तिमनुसृत्य, श्रयत इन्दिरा शश्वदत्र हीति पूर्वं यथोक्तं तद्वदिद-मुक्तमिति द्रष्टव्यम्। यद्वा कंसादिमरणेन व्यक्तमेव तस्य श्री-मद्विष्णवतारत्वेत्यभिप्रेत्येदम्। यद्वा, ननु स वञ्चकश्चेत्तर्हि लक्ष्मीं कुतो न वञ्चितवाँस्तस्मात् तदुरीकारहेतुभूतमेवाज्ञ नमेव युष्माकं नासीतिचेत्तत्राह ॥ पदीति ॥ तत्कृतमेवाप्रकारो ज्ञातः मद्नुष्ठातुं शक्यः। स त्वस्माभिर्न ज्ञातः। प्रियसन्निधौ तत्प्रकारकाशस्या-ऽलब्धत्वादिदानीं तस्या दूरचरत्वादतस्त्वयैव करुणया तत्र गत्वा तां पृष्ट्वागत्य वक्तव्यः। परं तु स प्रकारो ज्ञातोऽपि अस्मा-भिरनुष्ठातुमशक्यो यतः सा पद्मा, पादि चरणं प्रतीति तथा तद्-ऽभिन्नतयाऽवस्थिता। अस्माकमपि चरणभेदो भूमभावो वा यदि भवेत् तदा तत्साद्दृश्यं स्यान्नान्यथेतिभावः। एतेन लक्ष्म्यवतारा-ऽप्रसिद्धेः कथमेवमुक्तमितिशङ्कानिरासाय तत्र प्रमाणमप्युक्तम्। तस्या भगवन्तं विना क्षणमात्रमपि स्थातुमशक्तत्वात्। अत एव, परिचरतीति वर्त्तमानापदेशः। यद्वा, ननु यदि तस्मिन् दोषगन्धो-

ऽपि चेद् भवेत्तर्हि चतुरशिरोमणिभूता ब्रह्मादिभिरपि प्रार्थ्यमानपादपद्मा पद्मा कथमनिशं तत्पादपद्मसेवा परा स्यादित्याशङ्क्याह ॥ परिचरतीति ॥ तुः वितर्के । चपलशिरोमणिभूतेन तेन तथाभूतायास्तस्याः कथं निरन्तरः सम्बन्ध इति तु वयं न विद्म इत्यर्थः । क्षणं विचार्य ऽऽशे ज्ञातं मयेत्याह ॥ ह्यपीति ॥ अपिः सम्भावनायां, बतेति खेदे, हिः प्रसिद्धौ । उत्तमश्लोकस्योत्तमयशस्वितेन ख्यातस्य जल्पैर्निरर्थकवाग्जालरचनाभिर्हृतं चेतो यस्याः सा । तथा चैतद्वचनान्यनर्थकानीत्यबुद्ध्यैव सेवत इत्यसौ न स्वहृदभिज्ञेति भावः । उत्तमश्लोकस्येव जल्पैरिति वा । यद्वा, उत्तमश्लोकानां नारदादीनां जल्पैर्वचनैः स्वपक्षस्थापनपूर्वकपरपक्षनिराकरणात्मकथाविशेषैरिति वा । तथाच तद्दोषानुद्भावयन्ती प्रमाणाभासं वदद्भिर्भत्तुभिः पुरुषैस्तैर्नारदादिभिर्बलात्कारेण स्वमते प्रवेशिता सती परिचरति प्रतिष्ठितैरयुक्तं यद्युक्तं सर्वैर्युक्तमित्येव मन्यत इति तद्वक्तृत्वयुक्तस्या लक्ष्म्याः पराजय इति भावः । अस्मिन् पक्षे परिजल्पो वर्णितः । पाययित्वा तत्याज भवादृशीति प्रभोः शाठ्यानर्दयत्वचापल्याकृतज्ञत्वादेः प्रतिपादनात् । उत्तरार्द्धेन स्वस्य विचक्षणताऽभिव्यक्तेश्च । तदुक्तं— प्रभोर्निर्दयताशाठ्यचापल्याद्युपपादनात् * स्वविचक्षणताव्यक्तिभङ्ग्या स्यात् परिजल्पितमिति ॥

उद्धवपक्षे, हे अमर, अं वासुदेवं धूतवतां यादवानां मध्ये मुख्य । यथा श्रीविष्णुः सुमनसो देवान् सुधां पाययित्वा स्वां मोहिनीं तद्रूपं तत्याज तथा श्रीकृष्णः, अधरसुधां स्वामस्मान् पाययित्वा अस्मांस्तत्याज । भवादृक् भवद्वयवादिसदृशावयवादिमान् । अन्यत् समानम् ॥

श्रुतिपक्षे, मायाङ्घ्रिस्पर्शात् त्वं संसारी, तदस्पर्शादीश्वरो-

ऽसंसारी तया सेव्यमानपादपद्म इत्याह ॥ सकृदिति ॥ हे अधर, तच्चरणसेवनादनीश्वरत्वभ्रान्त्या निकृष्ट । अनीशया शोचति मुह्यमान इत्यादिश्रुतेः । स परमेश्वरः सकलजीवमोहकरीं मोहिनीं मायां स्वां सुधां सत्तास्फूर्तिलक्षणां सकृत् पाययित्वा स्वां स्वाधीनां मोहिनीमिति वा तत्याज । जहात्येनां भुक्तभोगामजोऽन्य इत्यादिश्रुतेः । इवशब्दः पायने त्यागे च सम्बन्धनीयः । तयोर्वास्तवत्वाभावात् । असुभिर्मा प्रमा यस्य स इन्द्रियजन्यतत्तद्विषयकयथार्थत्वज्ञानवानसुमस्तस्य सम्बोधनं हे असुमेति । असूपलक्षितसंघाते आत्मत्वप्रमा यस्येति वा । अस्मान्न तत्याज । यः सर्वज्ञः सर्वविद् सर्वस्य वशी सर्वस्येशानः, मायिनं तु महेश्वरमित्यादिभिरस्माभिः प्रतिपाद्यत्वं न जहौ । त्वं तु देहादावात्माभिमानं कृत्वाऽस्मत्प्रतिपाद्यमात्मस्वरूपं विस्मृतवानसीति भावः । नन्वहमनीश्वरत्वेन तस्मादत्यन्तविलक्षणत्वान्नोपालम्भयोग्य इतिचेत्तत्राह ॥ भवादृक् भवत्सखः स, न तु वस्तुतोऽत्यन्तविलक्षण इत्यर्थः । सयुजा सखायेत्यादिश्रुतेः । ननु स यदि मायां त्यक्तवाँस्तर्हि कथं लक्ष्मीरूपेण सा तत्पादपद्मं सेवत इति शङ्कते ॥ परीति ॥ नन्वर्थे तुः । समाधत्ते ॥ अपीति ॥ बतेत्याश्चर्ये हृतचेता वशीकृतचित्ता सती उत्तमस्य श्लोकजल्पैः यशःकीर्त्तनादिभिस्तत्पादपद्मं परिचरति । स तु सर्वदोदासीन एव तिष्ठतीतिभावः । यद्वा, ननु सा तस्मिन्नेवास्ति । अधिष्ठानात् पृथगारोपितस्य स्थित्ययोगादित्याशङ्क्याह ॥ परीति ॥ स्वयं लक्ष्म्यादिरूपेण परिणता च सती तत्पादपद्मं, बतेत्याश्चर्ये । कथन्तु परिचरति । तस्यास्तत्परिचरणस्य चानिर्वाच्यत्वात्तद्विरुद्धस्वभावत्वाच्चेति भावः । यद्वा, विपर्यये बाधकमाह ॥ परीति ॥ न हि मायावृतं पद्मा परिचरत्यतोऽसौ निर्माय इति भावः ॥ १३ ॥

एवं बहुधोक्तोऽपि पादं स्प्रष्टुमेव प्रवृत्तस्ततश्च सकोपनया प्रक्षिप्तेन पादेन ततोऽपसृत्य बहुधा झङ्कारानकरोत् । तान् श्रुत्वाऽस्मत्प्रसादलाभाय कृष्णं गायतीति मत्वा आह ॥

किमिह बहु षडङ्घ्रे गायसि त्वं यदूना-
माधिपतिमगृहाणामग्रतो नः पुराणम् ॥
विजयसखसखीनां गीयतां तत्प्रसङ्गः
क्षपितकुचरुजस्ते कल्पयन्तीष्टमिष्टाः ॥ १४ ॥

किमिति ॥ हे षडङ्घ्रे किं किमर्थं गायसि । ननु तत्र को दोष इतिचेत् तत्राह ॥ इहेति ॥ अत्र शोकाविष्टे व्रजे रुदतां सन्निधौ रोदनमुचितं, न तु गानमिति भावः । किञ्च, यत्र गानमेवायुक्तं तत्र बहु गायसि । किञ्च दुःखोपशमोपयुक्तं गानमपि कृतं चेन्नास्ति तादृशोऽपराधस्त्वं तु क्षतोपरि क्षारं निक्षेप्तुमुद्यतोऽसीत्याहुः ॥ यदूनामाधिपतिमिति ॥ न तु गोपिकानामधिपतिम् । तथाच रोदनं गानं वा यदि ते कर्तव्यं तर्हि गोपिकाधीशसम्बन्ध्येवात्र कुरु । सम्प्रत्यसौ यदुपतिरित्यभिप्रेत्य गायसिचेत्तर्हि यदुवरास्तवेष्टं विधास्यन्ति, न त्वत्रत्याः । अतस्तत्र गत्वा तत्सन्निधावेव गानं कुर्विति भावः । चतुष्पात् पशुर्हि विवेकशून्यो भवति । त्वं तु षट्पादिति सार्द्धपशुत्वात् स्थानास्थानविवेकविधुरत्वात्तथा करोषीति ध्वनयन्ती सम्बोधयति ॥ हे षडङ्घ्र इति ॥ यद्वा, यद्यपि मद्गानं भवतीनां दुःखजनकं तथापि गानस्वभावोऽहमन्यत्र गन्तुमशक्तत्वादत्रैव गायामीतिचेत् तत्राह ॥ हे षडङ्घ्रे इति ॥ द्विपादपि बहु दूरे गन्तुं शक्नोति, त्वं तु षट्पदत्वादन्यत्र किमर्थं न गच्छसि, किमित्यस्मद्दुःखदानाय प्रवृत्तोऽसीति भावः । ननु व्रजे तस्य प्रेमातिशयादहमपि व्रजं दृष्ट्वा प्रसन्नः सन् गायामीतिचेत्तत्राह ॥

पुराणम् ॥ प्रेमातिरेकस्तस्यास्माभिर्बहुशोऽनुभूतो, न त्वया वर्ण-
नीयः । सकपटैव तत्प्रीतिः स्थितेति भावः । यद्वा यावत्कालं स
इह स्थितस्तावत्कालं तस्य प्रीतिरासीन्नाधुनेति भावः । यदि व्र-
जे एव गानं मया कर्त्तव्यमिति तवाग्रहस्तर्हि यत्र स्थितस्य तव
गानशब्दोऽस्मत्कर्णपथं नावगाहते तत्र स्थित्वा गानं कुर्वित्याह ॥
नोऽस्माकमग्रतः किं गायसि । कुत इतिचेत्तत्राह ॥ अगृहाणामि-
ति ॥ न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यत इत्युक्तत्वाद् अगृहणी-
नां तेन त्याजितगृहणीभावानाम् । तथाच दुःखितानामस्माकं दुः-
खदाने तव को लाभ इति भावः । यद्वा सर्वेश्वरस्य भगवतो यदु-
पतित्वनापि गानं तच्छ्रवणं च नानुचितमितिचेत्तत्राह ॥ अगृहा-
णामिति ॥ त्वं स्वार्थं गायसि ? किं वाऽस्मदर्थम् । नाद्यः । यतो
वयमगृहास्तेनैव त्याजितपूर्वगृहाः स्वगृहे च न स्थापितास्तस्मा-
त्स्वगृहभगवद्गृहविधुराणां मार्गे उपविष्टानां चणकमुष्टिमात्रभिक्षा-
दानेऽप्यशक्तानामग्रे गानकर्तुस्तव किं फलं सेत्स्यति । सर्वा अ-
प्येवंविधा इति बोधयितुं बहुवचननिर्देशः । ननु युष्मत्प्रसादलब्धै-
र्युष्मदङ्गोत्तीर्णजीर्णवसनमालाशीर्वादादिभिरेवाहं कृतकृत्यो भवि-
ष्यामि धर्मं वा लप्स्यामीति चेत्तत्राह ॥ पुराणमिति ॥ भगवतो
बहुधा दृष्टत्वाच्छ्रुतत्वाच्च तद्गानस्य विस्मयकारित्वाभावादुक्तं फ-
लमपि दुर्लभम् । नाप्यत्र तद्गाने तव कश्चिद्धर्मविशेषः । अस्माकं
तेन सुखाप्राप्तेः । एतेन द्वितीयः पक्षोऽपि निरस्तः । तच्छ्रवण-
स्यानिष्टापादकत्वात् । श्रवणादिनैवंदशाप्रापकत्वेनाऽनुभूतस्य
संबन्धिगानादिकमितः परं वयं न श्रोष्यामः।इतोऽधिकफलादर्श-
नेन पारिशेष्यात्तेन स्वरूपनाशस्यैव संभावितत्वात् । स च स्व-
रूपे सति भगवान् कदाचित्प्राप्येतेत्याशावतीनामस्माकमनिष्टोऽतो
नास्मदर्थमपीहेदं तव गानमिति । अथ मन्दझङ्कारान् कुर्वन्तं खिन्न-

चित्तं मत्वा, भो भ्रमर मा विषण्णो भव, विवेकशून्ये गानोपजीविनि न वयं कुप्यामोऽपि तु तव प्राप्त्युपायं वदाम इत्याशयेनाह ॥ विजयेति ॥ विशेषेण जयते सर्वोत्कर्षेण वर्तत इति विजयः श्रीकृष्णः स चाऽसौ तव सखा चेति विजयसखस्तस्य सखीनामेवाग्रतस्तस्य प्रसङ्गः अस्मत्त्यागपूर्वकपुरस्त्रीवश्यतावाक्सन्दर्भो गीयताम् । ततस्ता इष्टास्तेन संमानिताः अस्मद्दुर्दशापूर्वकतत्सौभाग्यगानेन त्वया वा समानिताः सत्यस्तवेष्टं विशेषतः करिष्यन्ति । यद्वा कामयुद्धे विशिष्टो विगतो वा जयो यस्य सः । स चाऽसौ सखा चेति तथा तस्य सखीनां प्राप्तजयपराजयानामग्रतः सुरतजयपराजयनिरूपकपदसन्दर्भो गीयताम् । यद्वा प्रकृष्टो जय एव सखा यस्य तस्य सखीनाम् । तथाच ता एवम्भूतास्तस्य सख्यो, वयं त्वेकनिष्ठत्वान्न तथाभूता इति, अत्र प्ररोचनार्थं गानं नापेक्षितमिति भावः । यद्वाऽनवच्छिन्नभगवद्ध्यानलब्धसार्वज्ञतया भावी वृत्तान्तोऽपि भूतवन्निर्दिष्टः । तथाच विजयस्यार्जुनस्य सखा विजयसखस्तस्य सखीनां हरणादिना प्राप्तव्यानाम् । कल्पयन्ति कल्पयिष्यन्ति । यद्वा इन्द्रादिकृतगवेन्द्राभिषेकमारभ्य श्रीकृष्णस्य गोविन्देति नामधेयं यथा प्रतिष्ठितमभूत्तथा स, सोऽर्जुनस्तव सखा भविष्यति स च त्वया पालनीय इतीन्द्रोक्तिमारभ्य विजयसखेत्यपीति तदभिप्रायेण भगवति तच्छब्दः प्रयुक्तः । तथाच स्त्रिय एव तत्प्रिया रसिकाश्चेत्यतो गायकेन मया तत्सन्निधावेव गानं विधेयं, न तु पुरुषाणां समीप इति यदि तवाभिप्रायस्तर्हि विजयसखसख्यो यथोक्तलक्षणत्वात्तच्छ्रवणाधिकारिण्यो, नेदानीं वयमिति भावः । अप्राप्तपुरुषार्थस्यान्येष्टसंपादनाशक्तत्वात् ता एव लब्धपुरुषार्थत्वात्ता एव तवेष्टसंपादनायालमित्याशयेनाह ॥ क्षपितेति ॥ कामयुद्धे गाढालिङ्गनेन काठिनभावं प्राप्तेन हस्तेन वा मर्दनेन क्षपिता ना-

शिता कामकृतकुचपीडा यासां ता इति सकटाक्षमुपहासः । अत्र विजल्पः । तदुक्तम्– व्यक्तयाऽसूयया गूढमानमुद्रान्तलीलया * अलं द्विषि कटाक्षोक्तिर्विजल्पो विदुषां मत इति ॥

उद्धवपक्षे, हे बहुषडङ्घ्रे पुष्करमालासौरभाकृष्टानां बहूनां षडङ्घ्रीणां तत्सन्निधौ विद्यमानत्वाद् बहवः षडङ्घ्रयो यस्य स तथा । समानमन्यत् ॥

श्रुतिपक्षे, ननु प्रकृतेः परमेश्वरपराधीनत्ववर्णनमनुपपन्नम् । परमार्विद्भिः सांख्यैरीश्वरमनङ्गीकृत्य त्रिगुणात्मिकायाः प्रधाना-ऽपरसंज्ञायाः प्रकृतेः स्वतन्त्राया एव जगत्कारणत्वाभिधानात् । नचाचेतनायाः प्रकृतेः स्वतन्त्राया जगत्कारणत्वमनुपपन्नम् । त-दैक्षतेत्यादिश्रुतौ जगत्कारणस्येक्षितृत्वश्रवणादिति वाच्यम् । अचेतनेऽपि प्रधाने चेतनवदुपचारात् । दृष्टो ह्यचेतनेऽपि कूले, कूलं पिपतिषतीति चेतनवदुपचारः । यथा लोके चेतनो देवदत्ता-दिः स्नात्वा भुक्त्वा चापराह्णे रथेन नगरं प्रवेक्ष्यामीत्यालोच्यान-न्तरं नियमेन तथैव प्रवर्त्तते, तथा प्रधानस्यापि महदाद्याकारेण नियमेन प्रवर्तनात् तत्र चेतनत्वोपचारः । तत्तेज ऐक्षत ता आप ऐक्षन्तेतिवत् । जहात्येनामित्यादिश्रुतयस्तु मुक्तजीवपरास्तस्मात् कथमुक्तमीश्वरः सर्गाद्यर्थं स्वशक्तिभूतां प्रकृतिमधितिष्ठति जहा-ति चेति चेत्तत्राह ॥ किमिहेति ॥ श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च * अधिष्ठाय मनश्चायं विषयानुपसेवत इत्युक्तमनः-षष्ठानि इन्द्रियाणि अङ्घ्रयो गमनागमनसाधनानि यस्यात्मनः स षडङ्घ्रिस्तस्य सम्बोधनं हे षडङ्घ्रे । इह स्वस्वरूपभूतपरब्रह्मो-पलब्धिसाधनेऽधिकारिशरीरे ऊनां न्यूनां जडात्मत्वादपरां भू-मिरापोऽनलो वायुः खं मनो बुद्धिरेव च * अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा * अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परा मि-

ति भगवतोक्तां बहुस्वतन्त्रेयमित्यादिना पुनःपुनरुत्कृष्टत्वेन यद् गायसि तत्राप्यस्माकं श्रुतीनामग्रतः श्रुतिसिद्धान्तत्वेन तत् किं, न किमपि। तद् गानमयुक्तमिति यावत् । इह श्रुतिमस्तकेषु जडत्वेन प्रतिपादितामिति वा । तर्हि किं युक्तमितिचेत्तत्राह ॥ अधिपतिमिति हे अ वासुदेवाधिपतिं प्रकृत्यधिष्ठातारं तत्सत्तास्फूर्तिप्रदत्वेन ततोऽपि पुरातनत्वात्पुराणम् । अं वासुदेवं गृहाण । अयमर्थः । स य एषोऽणिमा, ऐतदात्म्यमिदं सर्वं, तत्सत्यम्, स आत्मा तत्त्वमसि श्वेतकेतो इति प्रकृतस्य जगत्कारणस्यात्मत्वेनोपदेशादनात्मभूतायाः प्रकृतेर्न स्वातन्त्र्येण जगत्कारणत्वं श्रुतिसिद्धम् । उदाहृतदृष्टान्तेष्वपि सदधिष्ठितत्वप्रयुक्तमेवेऽक्षितृत्वमतः प्रकृतिस्वातन्त्र्यवादस्य श्रुत्यनभिमतत्वात् तदनुसरणं त्वया न कार्यमिति यः सर्वकारणं भगवान् वासुदेवः स एव त्वं नान्योऽतोऽहमेव वासुदेव इति स्वात्मत्वेन तं गृहाणेति संबोधनाशयः । यद्वा अधिपतौ मा प्रमा यस्य स तस्य सम्बोधनं, हे अधिपतिम । तथाच श्रुतिबहिर्भूतं मतमुपेक्ष्य सर्वानर्थहेतुमायातरणार्थं तदधीशविषयकप्रमामेव सम्पादय । दैवी ह्येषा गुणमयी मम माया दुरत्यया * मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त इति भगवद्वचनादिति भावः । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः. श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः, सततं कीर्तयन्तो मामित्युक्तत्वात् प्राप्त्युपायं श्रवणादिकमाह ॥ विजयेति ॥ ब्रह्म ह देवेभ्यो विजिग्ये ब्रह्मणो वा एतद्विजये महीयध्वमित्यादिश्रुत्या विशेषेण जयो यस्य स विजयः परमात्मा । सयुजा सखायेति श्रुत्या तत्सखा जीवात्मा तस्य सम्बोधनं हे विजयसखेति ॥ नो अस्माकं सखीनां, यतो वा इमानि भूतानि जायन्ते, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, सदेव सोम्येदमग्र आसीत्, एकमेवा-

द्वितीयं,सत्यं ज्ञानमनन्तं,विज्ञानमानन्दं ब्रह्म,अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ नान्योऽतोऽस्ति द्रष्टेत्याद्यानां तस्मिन् प्रत्यगभिन्ने परमात्मान प्रसङ्गः समन्वयो गीयताम् । तस्य सखीनामस्माकमिति वा विजयसखत्वात्तवेदमेवोचितमिति सम्बोधनाशयः । तत्प्रसङ्गं विशिनष्टि ॥ क्षपितेति ॥ कुत्सितं चरति अनर्थहेत्वहङ्काराद्यात्मना परिणमत इति कुचरु अज्ञानम् । तस्माज्जातः सर्वोऽपि संसारः कुचरुजः । क्षपितो नाशितः समूलः कुचरुजो येन सः । एवं संमानिता उक्तसख्यस्तद्गानपरायणस्य तवेष्टं मोक्षं कल्पयन्ति प्रतिपादयन्ति । तरति शोकमात्मवित्, ब्रह्मविदाप्नोति परं, ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतेः । वर्तमानापदेशेन मोक्षप्राप्तेः कालान्तरसाध्यत्वं वारयति । अत्र ब्रह्म समश्नुते विमुक्तश्च विमुच्यते ब्रह्मैव सन् ब्रह्माप्येतीत्यादिश्रुतेः ॥ १४ ॥

ननु भो मानः ! चातुर्यसागरभूते मथुराख्ये पुरे क्षत्रियाङ्गनानां स्वस्वान्तःपुरेऽवस्थितानां दर्शनस्यापि दुर्लभत्वाद्भगवतश्च त्वदासक्तचित्तत्वेन त्वां चिन्तयतस्त्वद्वियोगेन विह्वलतया वर्तमानत्वान्नासौ यथोक्तोपालम्भविषयोऽतः प्रसीद । त्वदनुस्मरणोत्थमन्मथाविष्टमानमेन तव प्रियेण त्वत्प्रसादार्थमेवाहं प्रेषितः । त्वत्प्रसादमप्याकर्ण्य तस्य सुखं भविष्यत्यतस्तदुपरि करुणां कुर्वित्याशङ्क्य करमर्दनशिरःकम्पपूर्वकं सेर्ष्यमाह ।

> दिवि भुवि च रसायां काः स्त्रियस्तद्दुरापाः
> कपटरुचिरहासभ्रूविजृम्भस्य याः स्युः ॥
> चरणरज उपास्ते यस्य भूतिर्वयं का
> अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ १५ ॥

दिवीति ॥ दिवि स्वर्लोकादारभ्य ब्रह्मलोकान्तेषु लोकेषु भुवि

सभुवर्लोके भूलोके रसायां सप्तसु पातालेषु चकाराद्ब्रह्माण्डाद्बहि-
रपि यास्त्रियस्ताः का नाम तव तस्य दुरापा दुष्प्रापाः, न का-
श्चनापि । तथाच स्वर्लोकादौ गतस्यात्रैव वा तदाकर्षणपरस्य
स्त्रीमात्रमपि यदा न दुष्प्रापं तदा मधुपुरस्त्रीणां का कथेति भा-
वः । यद्वा तत्तल्लोकस्थिता दुष्प्रापा अपि याः स्त्रियस्ता अपि त-
स्य स्युः, न तु स्वपत्नीनाम् । यतस्तद्वशीकरणसामग्री तत्सन्निधौ
पुष्कला वर्तते इत्याशयेन तं विशिनष्टि ॥ कपटेति ॥ कपटेन रु-
चिरेण चारुणा हासेन च भ्रूविजृम्भो यस्य, कपटेन रुचिरौ हासभ्रू-
विजृम्भौ यस्येति वा । कपटपूर्वकं यो रुचिरो हासस्तेनभ्रूविजृम्भः
स्थानादिसूचनपूर्वकं रत्यर्थमाकारणरूपो यस्येति वा । तथाचैवं-
विधस्य न काऽपि स्त्री दुर्लभेत्यर्थः । तदुक्तं, स्थानं नास्ति क्षणं नास्ति
नास्ति प्रार्थयिता नरः * तेन नारद नारीणां सतीत्वमुपजायत
इति । किञ्चालौकिकसामग्री तस्य निकटे या वर्तते तत्सत्त्वे लौकि-
कसामग्र्यपेक्षैव नास्तीत्याशयेनाह ॥ चरणेति ॥ सर्वैरर्थार्थिभि-
रर्थ्यमाना विभूतिर्लक्ष्मीर्यस्य स्वतः सामर्थ्याद्वस्तुमाहात्म्याद्वा
चरणरज उपास्ते परमादरेण किङ्करीवत् सेवते । यद्वा अन्यासां
स्त्रीणां का कथा, परमसतीत्वेन प्रसिद्धा नारायणाङ्गविभूतिरपि
तच्चरणरज उपास्त इत्याह ॥ चरणेति ॥ तत्रैवंविधस्य तस्य नि-
कटे वयं काः । विभूतिकोटिकोट्यंशादपि न्यूना व्रजस्त्रियः क-
स्यां गणनायां स्थातुं योग्याः । अत एव वयं तेन नाकृष्टाः । एवं
सति किमस्मास्वेवं कपटं कर्तुमागतोऽसीत्याशयेन– हे कपटेति
सम्बोधनं वा । एवं स्वस्याऽयोग्यत्वमापाद्य परिहरति ॥ अपिचेति ॥
यद्यप्येवं तथापि कृपणपक्षपातिनि दीनानुकम्पावति पुरुषे उत्त-
मश्लोकशब्दः प्रवर्तते इति प्रसिद्धम् । तथाचोत्तमश्लोकशब्दवा-
च्यस्य तस्य दीनानामस्माकं पक्षपात उचितः । यथाचैवं भवेत् तथा

त्वयाऽस्मत्प्रियो वक्तव्य इति । यद्वा यद्यप्येवं तथाप्युत्तमश्लोक-शब्दस्तस्मिन्मिथ्यैव प्रयुज्यते । कृपणपक्षपातित्वरूपतत्प्रवृत्तिनि-मित्ताभावात्। तथाच तच्छब्दयाथार्थ्यं च यदि तस्य प्रार्थ्यं तर्ह्य-स्मद्विधदीनजना दुःखसागरादुद्धर्तव्या इति भावः । अनया वक्रो-क्त्या विभूतिसहितस्त्र्यपेक्षया स्वस्थानमप्रजन्त्यो वयमेवोत्तमा इति ध्वनयति । यद्वा यथा वयं तस्याऽगण्यास्तथाऽस्माकं सोऽप्यग-णनीयः । कार्पण्याभावादित्याशयेनाह ॥ अपिचेति ॥ कृपणा एव तस्योत्तमश्लोकत्वं जल्पन्ति, तदर्थमनुसन्धाय तदधीनाश्च भ-वन्ति, न त्वस्मादृश्यः । निःस्पृहस्य तृणं जगदिति न्यायादित्यर्थः । अत्रोज्जल्पः । तदुक्तं– हरेः कुहकताख्यानं गर्वगर्भितयेर्ष्यया * सासूयश्च तदाक्षेपो धीरैरुज्जल्प इष्यत इति ॥

इदं पद्यमुद्धवपक्षेऽपि समानम् ॥

श्रुतिपक्षे– ननु ब्रह्मणोऽपि श्रुतिप्रतिपाद्यत्वमसङ्गतम् । प्र-त्यक्षादिविषयपाराविष्ठितवस्तुप्रतिपादने हेयोपादेयरहिते प्रयोजना-भावात् । अत एव जैमिनिना, आम्नायस्य क्रियार्थत्वादानर्थ-क्यमतदर्थानामित्याशङ्क्य, विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन वि-धीनां स्युरित्यर्थवादवाक्यानां विधिस्तावकत्वेनार्थवत्त्वमुक्तम् । मन्त्राणां चेषेत्वादीनां क्रियातत्साधनाभिधायित्वेन तत्त्वमुक्तम् । तस्मादुपनिषदामपि कर्मापेक्षितकर्तृस्वरूपदेवतादिप्रकाशनेन क्रिया-विधिशेषत्वमास्थेयमिति चेत् तत्राह ॥ दिवीति ॥ स्वर्गादौ, काः आनन्दघनब्रह्मसंबन्धिन्यो याः स्त्रियः पतिव्रतास्त्रीवत् स्वार्था-विनाभूताः याः स्युः। तत् ताः कपटरुचिरहासभ्रूविजृम्भस्य कर्म-कर्तुर्दुरापाः प्रतिपादकत्वेन प्राप्तुमशक्याः । रुचिरौ हासभ्रूविजृ-म्भौ मायापरमेष्ठिधिष्ण्ये यस्य कपटश्चासौ रुचिरहासभ्रूविजृम्भ-श्च तस्य । हासो जनोन्मादकरी च माया, तद्भ्रूविजृम्भः परमेष्ठि-

धिष्ण्यमित्युक्तत्वाद् हासभ्रूविजृम्भाभ्यां मायासत्यलोकौ गृह्येते भ्रूविजृम्भ इत्युपलक्षणं, लोकान्तराणामपि। रुचिरौ स्त्र्यादिहासभ्रूविजृम्भौ यस्येति वा । तथाच विचित्रवासनाक्रान्तस्वान्तस्य दुःखामत्याद्यात्मके कार्यकारणभूते प्रपञ्चे सुखसत्याद्यात्मकत्वभ्रान्तिमतः स्त्र्यादिविषयासक्तचित्तस्य कर्मकर्तुः प्रतिपादन उपनिषदां नास्त्युपयोगः । सदेव सोम्येदमग्र आसीदात्मा वा इदमेक एवाग्र आसीत्, तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्, अयमात्मा ब्रह्म सर्वानुभूः, ब्रह्मैवेदममृतं पुरस्तात्, अचक्षुरश्रोत्रम्, अप्राणो ह्यमनाः शुभ्रइत्यादिश्रुतिकदम्बस्य प्रत्यगभिन्ने ब्रह्मणि समन्वितस्यान्यपरत्वमुपचरितार्थत्वं कल्पयितुमिन्द्रादेरप्यसमर्थत्वात् । यद्यपि परिनिष्ठितं ब्रह्म, तथापि तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुत्या प्रत्यक्षाद्यविषयत्वात् तत्त्वमसीति ब्रह्मात्मभावः शास्त्रमन्तरेण नावगम्यते । नच हेयोपादेयरहितत्वादुपदेशानर्थक्यं शङ्क्यम् । हेयोपादेयविधुरब्रह्मसाक्षात्कारादेव समस्तक्लेशविनिवृत्त्या पुरुषार्थसिद्धेः । ननु जातिगुणकर्मस्वरूपसंज्ञासंबन्धानां शब्दप्रवृत्तिनिमित्तानां ब्रह्मण्यभावात् कथं तस्य युष्मत्प्रतिपाद्यत्वमित्याशङ्क्यैवं चेद् यदा तव ज्ञानं तर्हि परमसिद्धान्तं शृण्वित्याशयेनाह ॥ चरणेति ॥ तथाचानन्तकोटिब्रह्माण्डरचनायां समर्था विभूतिः सकलैश्वर्यवती महामाया शक्तिरपि यन्न स्पृशति तत्र निर्गुणे ब्रह्मणि वयं काः । तद्द्वयमपि दूरत एव तत्स्वरूपं लक्षयामः । तथाच श्रुतयः, यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, को अद्धा वेद क इह प्रावोचदित्याद्या इति भावः । नन्वेवं तर्हि किमिति महता प्रयासेन श्रुतिप्रतिपाद्यत्वं ब्रह्मणः स्थापितमिति चेत् । तत्राह ॥ अपिचेति ॥ यद्यप्येवं तथापि उत्तमश्लोकस्य प्रतिपादकः शब्दरूपः श्रुतिकदम्बः कृपणस्याज्ञस्यासम्भावनाविपरीतभावनाविष्ट-

चित्तस्य जीवस्य पक्षे तत्पक्षपाती तदुपकारायेति यावत् । तथाच श्रुतिः । आत्मानमविदित्वा योऽस्माल्लोकात् प्रैति स कृपणः, तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । स उपसन्नाय प्राहेत्याद्या ॥ १५ ॥

सरोजबुद्ध्या पादतले प्रविशन्तं, भो मातः सज्जनाग्रगण्यायास्तव पादं शिरसि धृत्वाऽहं त्वां क्षमापये । पादोपरि शिरःस्थापनमात्रेऽपि क्षमन्ते सज्जनाः । अतः क्षमैव तवोचितेति क्षमापयिष्यन्तमिव मत्वाऽऽह ।

विसृज शिरसि पादं वेद्म्यहं चाटुकारै-
रनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुन्दात् ॥
स्वकृत इह विसृष्टापत्यपत्यन्यलोका
व्यसृजदकृतचेताः किन्नु सन्धेयमस्मिन् ॥ १६ ॥

विसृजेति ॥ स्वशिरसि स्थापितं मदीयं पादं विसृज । एतावता अस्मद्दुःखनिवृत्त्यभावाद् वृथैव तद्धारणाग्रह इति भावः । तथाप्यत्यजन्तं प्रत्युत रुवन्तं, भो देवि त्यज्यतां कोपस्त्वन्मनोऽनुकूलमेव सर्वं भविष्यतीति प्रार्थयन्तमिव मत्वाह ॥ वेद्म्यहमिति ॥ मुकुन्दादभ्येत्य तस्मात् सर्वं शिक्षित्वादौत्यैर्दूतकर्मभिश्चाटुकारैः प्रियोक्तिरचनाभिरनुनयविदुषः प्रार्थनाभिज्ञस्य तव सर्वमहं वेद्मि । स्वामिनि कर्मणि वा षष्ठी । मुक्तिं ददातीति मुकुन्द इति बन्धनकर्तुरिदं विपरीतं नाम । तस्मात् त्वया सर्वं शिक्षितमतो विपरीतार्थतोक्तत्वात् त्वद्वाक्यं, मुकुन्दवत् त्वं च न विश्वासार्ह इति भावः । अनभिज्ञा हि वञ्च्यते । नचाहं लक्ष्मीवदनभिज्ञा, किन्तु विपरीतार्थनिश्चयवतीति वेद्म्यहमित्यनेन सूचितम् । वञ्चनाय प्रवृत्तस्य तव चातुर्यमपि प्रत्युत मन्निश्चयमेव दृढीकरोतीति ज्ञाप-

नाय चाटुकारैरित्युक्तम् । सुपुष्पितः स्यादफल इत्युक्तत्वेन निष्फलत्वान्माधुर्यस्य वञ्चनायामेव पर्यवसानात् । यद्वा मुकुन्दादभ्येत्याऽस्मद्गृहान् प्रत्यागत्यैवंविधस्य तव विद्वत्तामहं जानामि मदग्रे त्वया स्वविद्वत्ता न प्रकटनीया। त्वत एवैवंविधविनयं जानासि, न तु परत इति सूचनाय, त इत्युक्तम् । ननु दूतत्वात्तच्छिक्षित एवाहमिदं ब्रवीमीति शङ्कानिवृत्त्यर्थमभ्येत्य विदुष इत्युक्तम् । अत्रैवागत्यायं प्रकारस्त्वया कल्पितः। किञ्च, स मुकुन्दः मरणानन्तरं मोक्षप्रदः । जीवतीनामस्माकं सुखात्त्वदुक्तप्रकारं शिक्षयितुमयोग्य इति मुकुन्दपदेन सूचितम् । यद्वा न केवलं कल्पितोक्तप्रकारेणास्माकमेव त्वं वञ्चकः, किन्तु स्वभर्तुरपि निरुक्तमुकुन्दाख्यस्वस्वामिकार्यविरुद्धकार्यसम्पादकत्वान्मोक्षसाधनब्रह्मज्ञानाद्युपदेष्टुः सकाशादागतस्य तवाननुरूपत्वाद्धास्य प्रकारस्येति ध्वनयितुं मुकुन्दपदप्रयोगः । तथाच वृथैवेदं तव पाण्डित्यप्रकटनम् । अस्माभिर्बुद्धत्वात् स्वभर्तुः प्रतिकूलत्वाच्चात इतो दूरे गत्वा तूष्णीं तिष्ठेत्यर्थः । ननु तर्काप्रतिष्ठानादिति न्यायात्तत्त्वानिश्चायकैःकोपोद्भूतैरेवंविधतर्कैः स्वभर्तरि दोषानारोप्य वृथैव तेन विग्रहवती जातासि तेन च सन्तप्स्यसे । अतः प्राणप्रियया त्वया प्राणप्रियेण तेन सन्धिरेव कर्त्तव्य इति बद्धाञ्जलिः सन् त्वामहं प्रार्थयामीति चेत्तत्राह ॥ स्वकृत इति ॥ स्वस्य कृष्णस्य कृते तत्सुखार्थं तत्सङ्गजन्यसुखार्थं वा इह जीवद्दशायामेव विसृष्टास्त्यक्ताः—अपत्यानि पतयः, अन्ये पित्रादयो लोका इतरजनाः स्वर्गादयश्च याभिस्ता नः, अकृतचेताः असंयतचित्तः । न कृते अस्मत्कृतोपकारे चेतो यस्य सः, अकृतज्ञ इति वा व्यसृजत् । त्यक्तवान् । यद्वा, न च कृतमस्मासु चित्तं येन सः। यो हि प्रेष्ठो गच्छति स प्रेयसीं चित्ते धृत्वैव गच्छति। स तु नैवं कृतवान्। यद्वा आत्मा-

ऽर्थमस्मान् विसृष्टाऽपत्यादिका अकृत अकार्षीत् । इताः प्रा-
प्तास्तु सतीर्व्यसृजन्नु । अहो एवम्भूते अस्मिन् कठोरे अकृतज्ञे
शठे सन्धेयं सन्धातुमर्हं किं, न किमपि । यावत्कर्त्तव्यं स्थितं ता-
वद् गोपिकाभिरस्माभिः कृतम् । स तु सर्वसमर्थोऽपि न किञ्चि-
त्कृतवानेवमर्थे पूर्वं जाते पुनरधुना किं कर्त्तव्यम् । वक्तव्यान्तरा-
ऽभावात् फलाभावाच्चेत्यर्थः । तथाचैवम्भूतातिप्रसिद्धापराधवति
दोषोद्भावनं नासत्तर्कविजृम्भितम् । सद्युक्तिबोधितं त्वर्थं वेदोऽपि
न बाधनायालमिति भावः । यद्वा सन्धिः कर्त्तव्य इत्यस्मान् प्रति
प्रार्थना व्यर्था । तस्य विग्रहपूर्वकत्वात्तस्य च तेनैव कृतत्वादतः स
एवैवं प्रार्थनीय इत्याशयेनाह ॥ स्वकृत इति ॥ अस्माभिस्तु
सन्धिसाधनं सर्वमप्यनुष्ठितं, न किञ्चिदप्युर्वरितमतो न वयं तत्र
संनियोज्याः । वस्तुतः सोऽपि न नियोज्यः । य एवं कृतोपकारा
अप्यस्मानकृतार्था विहाय गतः स किमर्थं सन्धिवार्तामपि श्रोष्य-
तीत्यर्थः । अत्र सञ्जल्पः । तदुक्तं— सोल्लुण्ठया गहनया कया-
ऽप्याक्षेपमुद्रया*तस्याऽकृतज्ञताद्युक्तिः सञ्जल्पः कथितो बुधैरिति
निर्दयत्वपरद्रोहित्वप्रेमशून्यत्वान्यत्वान्यादिपदाऽऽदेयानि ॥

उद्धवपक्षेऽपि तथा करिष्यन्तं तमालक्ष्ययमुक्तिः समाना ॥

श्रुतिपक्षे, एवमविद्यावृतस्य जीवस्यान्तःकरणादितादात्म्या-
ध्यासादनर्थपरम्पराप्राप्तिः समस्तोपनिषत्तात्पर्यविषयप्रत्यगभिन्न-
ब्रह्मसाक्षात्काराच्चन्निवृत्तिरित्युक्तमथेदानीं तदन्तरङ्गसाधनभूतां
भगवदनुवृत्तिं विधत्ते ॥ विसृजेति ॥ मुकुन्दान्मुक्तिप्रदानाय वेद-
रूपेण कृष्णादिरूपेण च तदुपायोपदेशपरायणान्निःसृतैर्दौत्यैः
दूतभावं प्राप्तैरिव वाक्यैः—देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे ।
यस्य देवे परा भक्तिः, परीत्य भूतानि परीत्य लोकान् परीत्य
सर्वाः प्रदिशो दिशश्च * उपस्थाय प्रथमजाऽमृतस्यात्मनात्मान-

मभिसंविवेश । पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया । तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते । तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् । मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि म इत्यादिभिश्चाटुकारैरभ्येत्य तमनुसृत्यानन्यशरणो भूत्वा यस्तवानुनयो विमुखस्याभिमुख्यरूपाऽनुवृत्तिस्तद्विदुषः परमात्मनःपदं शिरसि विसृज धारय, कदापि तत्पादपद्मं मामुञ्च । मनसा प्रपन्नत्वनिश्चयो, वचसा तवास्मीति प्रार्थना, शिरसा तच्चरणोदकादिधारणं चेति मनोवाक्कायैर्भगवदाराधनं त्वया सर्वदा कार्यमितीदमेव तव निःश्रेयस्करमित्येवमहं वेद्मीत्यर्थः । इममेवार्थं तदनुवृत्तिरहितनिन्दया द्रढयति ॥ स्वकृत इति ॥ स्वस्य जीवस्य कृते धर्मार्थकाममोक्षार्थम् अपत्यानि पतयो भर्तारः स्वामिनो राजादयश्चान्ये पितृभ्रातृभार्यादयो लोकाः स्वर्गादयो विसृष्टा रचिताश्च ते अपत्यादयश्च ते यस्मिन् वर्त्तन्ते तथाभूतेऽस्मिन् परमात्मनि अकृतचेताः विवेकविधुरः कृतघ्नो वा, इहाधिकारिशरीरे सन्धेयं सन्धिसाधनं किमिति व्यसृजत त्यक्तवान् । अयोग्यमिदमित्यर्थः । यद्वा अत्र शिष्टाचारं प्रमाणयति ॥ स्वेति ॥ स्वकृते स्वाभीष्टसिद्ध्यर्थं विसृष्टास्त्यक्ता अपत्यादयो यैस्ते भगवत्यार्पितसर्वार्थाः, इताः मोक्षं गताः । हे अकृत अज अस्मिँश्च एवम्भूतेऽपि भगवति सन्धेयं किन्तु व्यसृजत । तथाच श्रुतयः—आराममस्यपश्यन्ति न तं पश्यति कश्चन, न तं विदाथ य इमा जजान अन्यद् युष्माकमन्तरं बभूव, नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्तीत्याद्याः ॥ १६ ॥

ननु भो मातः ! निरपराधापकाराय तु न प्राकृतोऽपि प्रवर्तते ।

स पुनः कृतज्ञाग्रगण्यः शोभनगुणालङ्कृतो भगवानपराधनिर्मुक्तानां युष्माकं दुःखाय प्रवृत्त इति का वाचोयुक्तिरतः स्वात्मसु कश्चिदपराधोऽन्वेषणीय इति चेद्दर्शनश्रवणाभ्यां निरपराधपीडाकरमेतदीयं स्वभावं वर्तमानप्राचीनजन्मसंबन्धितया सञ्जानतीनामस्माकमग्रे किमित्येवमबुध्वा जल्पसीत्याशयेनाह ॥

मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा
स्त्रियमकृतविरूपां स्त्रीजितः कामयानाम् ॥
बलिमपि बालमत्त्वाऽवेष्टयद् ध्वाङ्क्षवद् य-
स्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ १७ ॥

मृगयुरिवेति ॥ यो दाशरथिर्भूत्वा मृगयुरिव कपीन्द्रमपराधविनिर्मुक्तं बालिनं विव्यधे । यथा व्याधो मृगचर्मणा स्वशरीरमाच्छाद्य मृगं वेधयति तथा वृक्षेणायमपि तमपि अविध्यत । यतो लुब्धस्य धर्मैः क्रौर्यादिभिर्युक्तः ।

यद्वा व्याधा अनपकारिणं स्वोपकाराय नाशयन्ति, स तु ततोऽपि विलक्षण इत्याह ॥ लुब्धेति ॥ वानरस्याभक्ष्यत्वात् सीतान्वेषणस्य बालिनाऽतिसुकरत्वाद् वृथैव तं नाशितवानित्यर्थः । स्त्रियं शूर्पणखां निरपराधां विरूपां छिन्नकर्णनासामकृत । न केवलं निरपराधामपि तु सेवनाय कामयानामपि । काम एव यानं प्राप्तिसाधनं यस्यास्तां कामयमानामिति वा । यतः स्त्रीजितः सीतापरतन्त्रः। तथा यो वामनो भूत्वा बलिमपि निरपराधं प्रत्युत त्रैलोक्यार्पणात्परमोपकारिणमपि तद्दत्तबलिमत्त्वा भक्षयित्वा ध्वाङ्क्षवत् काकवदवेष्टयत् । काको यथा बलिं जग्ध्वा अन्यान् काकानाहूय बलिदातारं सर्वत आवृणोति तद्वद्बबन्ध । 'वामनोऽधोऽक्षिपद् य' इति पाठे बलिं पूजां गृहीत्वा तं त्रैलोक्यराज्यादधः पातितवानि-

त्यर्थः । तस्मादसितस्यैवम्भूतस्य कृष्णस्य सख्यैरलम् । पूर्वकृतस-ख्यैर्दुःखसागरे पतितत्वादितः परं तत्सख्यसंपादनजन्यदुःख-भोगसामर्थ्यमस्माकं नास्तीत्यर्थः । नन्वेवं तर्हि किमिति नित्यं त-त्कथापरायणा यूयमितिचेत् तत्राह ॥ दुस्त्यज इति ॥ यद्यप्येवं तथापि तत्कथारूपं वस्तु त्यक्तुमशक्यम् । किंकुर्मः । तत्त्यागे उपायं न पश्याम इत्यर्थः । यद्वा कथं तर्हि कृष्णस्य तत्तदवतार-कथा मुनिभिर्न त्यज्यत इतिचेत् तत्राह ॥ दुस्त्यज इति ॥ तत्कथा-यां का वा मोहनशक्तिरिति न जानीमः । यद्वा ननु, नाख्येयं पर-दूषणमिति निषेधात् किमिति तद्दूषणाख्याने यूयमासक्ता इति चेत् तत्राह ॥ दुस्त्यज इति ॥
यद्यप्येवं तथापि रोषावेशात् तूष्णीं स्थातुं न शक्यत इति भावः । यद्वा ननु सर्वं विहाय भगवत्सख्यमास्थिता इदानीं, तदपि प-रित्यज्य किं करिष्यथ इतिचेत्तत्राह ॥ दुस्त्यज इति ॥ तत्कथा-मवलम्ब्य स्थास्यामः । अस्माभिस्तु स त्यक्तुं न शक्यते, स एव कृष्णवत् त्यक्ष्यतिचेत् तदा तु मरणमेव भविष्यतीति भावः । यद्वा ननु सख्या केनचित् कारणेन प्राप्तेऽपि यत्किञ्चिद्वैमनस्ये तन्मा-र्जयित्वा पुनः सख्यमेव संपादयितुमुचितं, न तु सर्वदा विग्रह-पालनमित्याशङ्क्याह ॥ मृगयुरिवेति ॥ अहो किमित्येवं त्वया बोध्यते । कृष्णात् प्राप्तदुरन्तदुःखाभिरस्माभिरितः परं शठत्वका-मित्ववञ्चकत्वादिदोषाक्रान्तत्वात् कृष्णवर्णेन केनापि सख्यं न संपाद्यमिति निश्चयः कृतोऽतः पुनस्तेन सख्यसंपादनं तु दूरा-पास्तमिति भावः । नन्वेकत्र कृष्णे वञ्चकत्वादि दृष्ट्वा यत्र यत्र कृष्णत्वं तत्र तत्र वञ्चकत्वादिकमिति व्याप्तिः कथं गृहीतेत्याश-ङ्क्य भूयो दर्शनेनेत्याह ॥ मृगयुरिति ॥ तथाच स्वधर्मनिष्ठस्य क्षत्रियस्य रामचन्द्रस्य तथाविधकर्मानुष्ठाने तदेव प्रयोजकम् ।

एवं शान्त्यादिगुणालंकृतस्य ब्राह्मणस्य ब्रह्मचारिणो वामनस्य तथाचान्यत्र प्रयोजकान्तरसत्त्वेऽपीदमेव प्रयोजकमाश्रयणीयम् । अनुगतत्वात् । इदञ्च भवदादीनामप्युपलक्षणम् । कोऽपि सख्यभेदोऽसितवर्णैर्नापेक्षित इति सूचनाय सख्यैरिति बहुवचनम् । नन्वेवं तर्हि तत्कथयाप्यलं कुतो न क्रियत इतिचेत् तत्राह ॥ दुस्त्यज इति ॥ तत्कथार्थोऽपि परित्याज्य इति सर्वदाऽस्यस्मन्मनो वर्तते, तथापि त्यक्तुं न शक्यते, किं कुर्मः । अशक्यत्वाद् दुःखं सहामः । कृष्णोऽपि नास्माभिः परित्यक्तः, किन्तु स एवास्मान् परित्यज्य गतस्तद्वद् अयमपि यदि त्यक्ष्यति तदा त्यजतु नाम, नास्माकं तत्त्यागसामर्थ्यमित्यर्थः । हरौ काठिन्यकामित्वधौर्त्यौदासत्स्ययोग्यता * यत्र सेर्ष्यभियैवोक्ता सोऽवजल्पः सतां मत इत्युक्तेरत्रावजल्पः ॥

उद्धवपक्षेऽपि समानमिदम् ॥

श्रुतिपक्षे भगवानेव शरणीकरणीय इतीममर्थं द्रढयितुं तत्तदवतारे कृतं भगवता भक्तपक्षपातमावेदयति ॥ मृगयुरिवेति ॥ अलुब्धधर्मा पूर्णकामत्वाल्लुब्धत्वादिधर्मैरसंस्पृष्टोऽपि कपीनामिन्द्रं मारणायोग्यमपि मृगयुरिवायोग्योपायेनापि स्वभक्तस्य सुग्रीवस्य परित्राणाय विव्यधे । तथा स्त्रियमपि तत्रापि कामयानां विरूपत्वानर्हामपि भक्तिमत्या सीतया जितो वशीकृतो विरूपामकृत । तथा बलिं परमधार्मिकं बलिष्ठमपि तदीयां पूजां गृहीत्वापि महेन्द्रादिभिस्तदर्थमाराधितत्वादवेष्टयत् । यथा काकः स्वज्ञातिपक्षपाती तद्वत् । एवम्भूतो यः स्वभक्तपालनायाकृत्यमपि करोति तस्य कथारूपार्थस्तदनन्यशरणैर्दुस्त्यजः । तत्कथैव परमपुरुषार्थत्वेन तैः सेव्यते, न तु तज्जन्यं किञ्चित् फलं तैः प्रार्थ्यत इति ज्ञापनायार्थपदम् । तत् तस्मादसितानां मलिनानां भार्यापत्यधनादीनां मलि-

नैः संसारार्थमदैः सख्यैरलम् । असंख्यातकल्पेषु तत्फलं भुक्तमितः परं तानि परित्यज्य वासुदेवैकशरणो भवेत्यर्थः ॥ १७ ॥

यद्यपि तत्कथार्थोऽन्यपुरुषार्थमूलोच्छेदक इति जानीमस्तथापि त्यक्तुं न शक्नुमः, किं कुर्म इत्याशयेनाह ।

यदनुचरितलीलाकर्णपीयूषविप्रुट्-
सकृददनविधूतद्वन्द्वधर्मा विनष्टाः ॥
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना
बहव इव विहङ्गा भिक्षुचर्यां चरन्ति ॥ १८ ॥

यदिति ॥ यस्यानुचरितमेव लीला स्वच्छन्दक्रीडा तदेव कर्णपीयूषं तस्यापि विप्रुट् कणिका तस्यापि सकृददनं दूरातं कथञ्चिदास्वादनं तेन निरस्ता द्वन्द्वधर्मा रागादयो मिथुनीभूताचारा रत्यादयो वा यैः । तत्कथां पुरुषश्चेच्छृणोति सद्य एव भार्यादिस्नेहं जहाति, स्त्रीचेत् पत्यादिस्नेहं, पुत्रश्चेत् पित्रादिस्नेहं, माताचेत् पुत्रादिस्नेहमिति परस्परत्यागाद् विनष्टा मृतादपि सम्बन्धिनो विरक्ताः । तस्मादधिकदुःखस्य सांसारिकानुभवगोचरत्वाद्विशेषेण नष्टाः । सपदि लीलाश्रवणाव्यवहितक्षण एव, गृहं तत्र स्थितं कुटुम्बं पितृभार्यादिपोष्यवर्गं च, दीनं जीवनोपायरहितत्वाद्धनोपार्जकस्य विच्छेदकातरं परित्यज्य, स्वयमपि दीना निष्किञ्चनत्वाद् भोगहीनाः । धीरा इति पाठे रुदतः पित्रान् दृष्ट्वाप्यतिकठिनचित्तत्वाद् धैर्यमत्यजन्तः । एवंविधा असंख्याताः पक्षिण इव भिक्षुचर्यां चरन्ति गोधूमादिकणभिक्षापरिपाल्यैकजीवनवृत्तिं सम्पादयन्ति । इहेति पाठे विहङ्गास्तद्वत्परिग्रहरहिता इहाऽस्मद्वृन्दावने अस्मत्समक्ष एवातस्तेषां तत्कथार्थकृतामुक्तदशां प्रत्यक्षेणानुभूयापि वयं ततो निवृत्तिं न भजाम इति महाकष्टमित्यर्थः । एतेन कृष्णादिष्ट-

व्यासादिकृतपुस्तकात्मकजालस्थितकथारसाऽऽस्वादनकृतजालब-न्धनमवाप्य बहवोऽपि दुर्दशां प्राप्ता इति निरूपणेन कृष्णस्यैवं परदुःखजन्यसुखार्थिनः समस्तदुःखाय गृहीतेश्वरभावस्य मूल-कारणस्य दुःखदानजन्यफलभाक्त्वमित्यपि ध्वनितम् । यद्वा, ननु सर्वथा दोषाढ्य एव कृष्णश्चेत् तर्हि तत्कथार्थत्यागे कः प्रयासः दोषदर्शनस्यैव वैराग्योपायत्वाभिधानादित्याशङ्क्य स्त्रीत्वाद्विवेकशू-न्यानां बहुकालं तेनाऽभिरमितत्वेऽपि भ्रान्तत्वजातिभ्रष्टत्वादिर-हितानामसक्तस्वस्थानादिकानां तत्कथार्थत्यागासामर्थ्यमात्रे किं चित्रं, यतस्तल्लवोऽपि महतोऽपि महदनर्थसम्पादक इत्याशयेना-ह ॥ यदिति ॥ यस्य कृष्णस्यानुचरितं, यादृशः कृष्णस्तादृश-मेव तदनुचरितम् । अधिकानर्थसंपादकत्वादधिकमपि । भगवता पूर्वमाचरितं, पश्चाद्व्यासादिभिरुपनिबद्धम् । तस्माच्छब्दव्यवहित-मपि तथा कार्यसम्पादकम् । वस्त्रादिव्यवहितस्याऽपि ग्रीष्म-सूर्यस्य तापजनकत्वं यथेति भावः । अन्येषां पीडाकरमपि तस्य सुकरमिति ज्ञापनायाह ॥ लीलेति ॥ दोषसहस्राक्रान्तमपि विजा-तीयरसलोभविमोहिता भक्षयन्तीति सूचयन्त्याह ॥ पीयूषेति ॥ त-त्रापि ॥ कर्णेति ॥ कर्णाऽमृतं निमीलिताक्षेणापि पातुं शक्यमिति भावः । श्रवणमात्ररम्यमपीति वा । तत्रापि बिन्दुमात्रम् । बहुपाने तु किं स्यादिति भावः । एवम्भूतस्य बिन्दुमात्रस्याप्यत्यादरेण ग्रहणं, तेनैव विधूता द्वन्द्वधर्मा रागादयो येषां ते तद्बद्धहृदय-त्वाद्विनष्टा अदृश्यत्वं प्राप्ताः, गृहकुटुम्बादिकं दीनमुत्सृज्य स्वय-मपि दीनाः सन्त इहास्मिन्नेव जन्मनि विहङ्गा हंसाः परमहंसा वा जाताः । ननु तादृशाः कथमुपलभ्यन्त इतिचेत् तत्राह ॥ भिक्षु-चर्यां भिक्षाटनादिरूपमाचारं चरन्ति कुर्वन्ति । अस्मद्गृहद्वारि भि-क्षार्थमागत्य स्थिता इत्युपलभ्यन्त इत्यर्थः । तथाच महान्तोऽपि

तत्कथालवेनाप्येवंविधदुःखमनुभवन्तोऽपि यदा तन्न त्यजन्ति तदा तत्त्यागे अस्माकं किं सामर्थ्यमिति भावः । यद्वा, ननु तत्कथार्थो दुस्त्यज इति यदि जानासि तर्हि किमर्थं तद्गानं कुर्वन्तं मां निषेधसीतिचेत् तत्राह ॥ यदिति ॥ इह बहवो विहङ्गास्तद्गानशीलाः सन्तो भिक्षुचर्यां चरन्ति । तत्र को वराको भवान् । ते च गोपिकापतिं गोपिकाश्च गायन्तो नाऽऽदरं लभन्ते । भवाँस्तु यदुपतिं तत्सखीश्च गायन् कथन्तरामादरं लभतामित्याशयः । समानमन्यत् । यद्वा मास्तु तत्कथात्यागकथा । स तु सर्वदुःखप्रदत्वात्त्यक्तुमेवोचित इत्याशयेनाह ॥ यदिति ॥ भङ्ग्या त्यागोचितिस्तस्य खगानामपि खेदनात् * यत्र सानुशयं प्रोक्ता तद्भवेदभिजल्पितमित्युक्तेरत्राभिजल्पः ॥

उद्धवपक्षेऽप्येवम् ॥

श्रुतिपक्षे– शृणु, तत्कथालवस्याप्यलौकिकं माहात्म्यमित्याह ॥ यदिति ॥ पूर्वार्द्धमेकं पदम् । यथोक्ताश्च ते अविनष्टाश्च । ये द्वन्द्वधर्माणस्ते विषभक्षकत्वाद्विनष्टाः । तदुक्तं, भोगा विषयसंभोगाभोगा एव फणावताम् * स्पृशन्नपि मनाग् दष्टो दृष्टो नष्टः प्रतिक्षणामिति । त्यक्तविषयत्वात् पीताऽमृतत्वादेत एवाविनष्टाः । सपदि तत्क्षणमेव दीनं तुच्छं गृहकुटुम्बं विहाय दीना औद्धत्यरहिता विनयसम्पन्ना निष्किञ्चना वा । धीरा इति क्वचित् पाठः । बहवो विहङ्गा हंसा इव सारासारसत्यासत्यादिविवेकचतुराः भिक्षुचर्यां पारमहंस्यं चरन्ति । इहेति पाठे अस्मिन् अधिकारिशरीरे विहङ्गाः चिदाकाशगाः । तथाच यत्कथालवमात्रग्राहिणामपि यदा कृतकृत्यता तदा तदनन्यशरणानां माहात्म्यं किं वक्तव्यमित्यर्थः । तथाच तत्कथाप्रसादलब्धतत्त्वज्ञानानां माहात्म्यप्रतिपादिकाः श्रुतयः– यथा पुष्करपलाश आपो न श्लिष्यन्ति

तद्वद्विदि पापं कर्म न श्लिष्यते । न कर्मणा लिप्यते पापकेन ।
तत्सुकृतदुष्कृते विधुनुते इत्याद्याः ॥ १८ ॥

ननु पूर्वं तेन सख्यमासाद्य रमिता त्वं किमिदानीमेवं वक्तुं प्रवृत्तासि । परमाभिज्ञया त्वया प्रथममेव विचारणीयं स्थितमतः प्रियसंदेशमाकर्णय, ततो विचार्य तुष्य वा, कुप्य वेत्यशङ्क्याह ।

वयमृतमिव जिह्मव्याहृतं श्रद्दधानाः
कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः ॥
ददृशुरसकृदेतत्तन्नखस्पर्शतीव्र-
स्मररुज उपमन्त्रिन् भण्यतामन्यवार्ता ॥ १९ ॥

वयमिति ॥ यद्वा दूरस्थितास्तत्स्वभावाऽनभिज्ञा आपातरम्यां तत्कथामाकर्ण्य यथोक्तदशां प्राप्नुवन्तिचेत् प्राप्नुवन्तु नाम यूयं तु तत्सहचर्य्यो बालभावमारभ्य तत्स्वभावाऽभिज्ञाः कथं तस्मिन् विश्वस्यैवंविधां दुर्दशां प्राप्ता इतिचेत् तत्राह ॥ वयमिति ॥ वयमज्ञाः सहचरत्वेऽपि ग्रामीणत्वाद्वञ्चकत्वादिलक्षणतत्स्वभावाऽनभिज्ञा, जिह्मस्य सकपटस्य त्वद्बन्धोर्व्याहृतमसकृद्भवदीय एवाऽहमित्यादिमिष्टभाषितं सत्यं वेदवाक्यमिव श्रद्दधाना निश्चिन्वानाः। यद्वा कपटेनान्यथा प्रयुक्तमन्यथा प्रतीतिं जनयत्वित्यभिप्रायेण भाषितं- न मयोदितपूर्वं वा अनृतमिति साधनकाले, न पारयेऽहं निरवद्यसंयुजामिति फलकाले । इदं वाक्यद्वयम् । पूर्वं मया नानृतमुक्तं, भवदर्थे तु वक्ष्यामि, भवतीनां साधुकृत्यं न पारये न करिष्यामीत्यर्थविवक्षया तेन प्रयुक्तम्, अस्माभिस्तत्कपटानभिज्ञाभिरन्यथैव बुद्धमिति भ्रान्त्या सत्यमिव श्रद्दधानाः । क्वचिद्वृतमितीति पाठः । स्वज्ञाने हेतुं ज्ञापयन्ती अनुरूपं दृष्टान्तमाह ॥ कुलिकेति ॥ कुलिकस्य मृगवेषं विधाय गायमानस्य रुतं तत्प्राणापहाराभिप्रायेण प्र-

युक्तं गीतशब्दं सत्यमिव श्रद्दधाना, अयं कृष्णसारो मत्कृष्णसारा-द्विशिष्टस्तत्कार्यं करिष्यति गानश्चेति मत्वा तद्रुतं कृष्णसाररुतं स-त्यमिव श्रद्दधानास्तद्बन्धुत्वार्थं तत्सन्निधौ गताः। यथा गोपभार्या वयं गोपत्वेनाच्छन्नं यादवमीश्वरं वा कृष्णं गोपं मत्वा कृष्णवध्वो जाता इति सूचनायाह— कृष्णवध्व इति ॥ शरैः क्षताः सत्यो रुजो दद्द-शुस्तथा वयमेतद्ददशिम । किमित्यपेक्षायामाह ॥ तत् तस्य नखैः स्पर्शस्तेन तीव्रः स्मरस्तेन रुजः पीडाः, एता इदानीमप्यनुभूयमा-नास्तन्नखस्पर्शतीव्रस्मररुज इति वा । यद्वा, ननु यूयमेवंविध-विशालनेत्राः किमिति वञ्चनां प्राप्ता इत्याशङ्क्य प्रज्ञाचक्षुर्विधुरा वञ्च्यन्त एवातो, न वयमेवोपालम्भनीया इत्याशयेनाह ॥ वयमिति॥ यथा जिह्मव्याहृतं सत्यं श्रद्दधाना अज्ञा वयं तन्नखस्पर्शेन तीव्रः स्मरस्तेन रुक्पीडा यासां तथाभूता जातास्तथा कृष्णसारवध्वो हरिण्योऽपि कुलिकरुतं श्रद्दधाना अज्ञा एतदिव ददृशुः । अस्मद-नुभूयमानदुःखसमानशराघातजन्यं दुःखं ददृशुः । कटाक्षादयः क-दाचिद्विस्मर्यन्ते, न तु नखक्षतानि । स्मारकचिह्नानां विद्यमानत्वा-दिति ध्वनयितुं नखस्पर्शेत्युक्तम्।अन्याः पीडास्त्वौषधैः स्वनिदान-निवृत्त्या निवर्तन्ते, एतास्तु न कदापि । एतन्निदानस्य स्मरणस्य सर्वदा सत्त्वादिति सूचयितुं स्मर इत्युक्तम् । यद्वा तिष्ठत्वस्माक-मन्येषां च वार्ता । तिर्यग्योनिजा अपि दुर्दशां प्राप्ता इत्याह ॥ वयमिति ॥ तन्नखस्पर्शतीव्ररुजो वयमिवाऽज्ञाः कृष्णसारवध्वो हरिण्यो व्याधगीतसदृशं कृष्णस्य मुखेन वेणुना व्याहृतम् ऋतं श्रद्दधाना एतदस्माभिरनुभूयमानं कामजन्यं दुःखम् असकृद्ददृशुः । वयं नखस्पर्शेन यां दशाम् अधिगताः, तास्तां तद्व्याहृतश्रवणेनै-व प्राप्ता इति कोऽस्माकमपराध इति भावः । तस्माद्, हे उप-मन्त्रिन् अन्यवार्ता भण्यताम् । कृष्णवार्तायाः क्लेशप्रदत्वादन्यार्थ-

महमागतोऽहमन्यो, न तु कृष्णसंदेशहर इत्युक्त्वा अन्यवार्ता कथ्यतां, तदोपालम्भं न दास्याम इत्यर्थः। तत्स्वरूपस्य ज्ञातत्वात्तत्र च तन्निकटवर्तितया गुह्यवार्ताधारिणस्तद्गुह्यवृत्तप्रकटीकरणस्यायुक्तत्वाच्च मास्तु तद्वार्तेति संबोधनाशयः। यद्वा, हे हास्यप्रधान भण्डविद्यानिधानोपहास्यवार्तातिरिक्तवार्ता प्रोच्यताम् । रुदतीनामस्माकमुपहासवार्ताया हृदयविदारकत्वादिति भावः। जैह्मयं तस्यार्तिदत्वं च निर्वेदाद्यत्र कीर्तितम् ॥ भङ्ग्याऽन्यसुखदत्वं च स आजल्प उदीरित इत्युक्तत्वादत्राजल्पः ॥

उद्धवपक्षे, हे उपमन्त्रिन् अन्तरङ्गमन्त्रिन् । समानमन्यत् ॥

श्रुतिपक्षे– नन्वक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति, अपाम सोमममृता अभूमेत्यादिभिर्वेदवाक्यैः, यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ॥ अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमित्याद्यभियुक्तवाक्यैश्च स्वर्गसुखस्य नित्यत्वाभिधानात् सुगमे तत्प्राप्त्युपाये सति किमर्थं सर्वत्यागरूपे महत्यायासे नियोजयसीति चेत् तत्राह ॥ वयमिति ॥ कपटेन व्याहृतं हि वाक्यमन्यार्थाभिधायकमन्यथा प्रतीतिं जनयति। उदाहृतवाक्यमपि कर्मप्राशस्त्यबोधनाय प्रयुक्तं तत्फलनित्यत्वबोधकत्वाज्जिह्मेन व्याहृतं तदज्ञाः कर्मश्रद्धाभराक्रान्ताः । यज्जन्यं तदनित्यमिति व्याप्तिज्ञानविधुरत्वान्मन्दमतयः । ऋतं यथोक्तार्थकमिव श्रद्दधानाः । खानीन्द्रियाणि, तैः स्पृश्यन्त इति स्पर्शा विषयास्तेषु तीव्रो यः स्मरः कामः। स्मरपदस्याभिलाषे लक्षणा । तेन स एव वा रुक् येषां ते असकृत् पुनः पुनः, एतज्जन्ममरणादिलक्षणं संसृतिचक्रं ददृशुः । कृष्णवध्वो हरिण्यो यथा कुलिकरुतं श्रद्दधाना दुःखं ददृशुस्तद्वत् । तथाचोक्तं भगवता यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः, कामात्मानः स्वर्ग-

परा भोगैश्वर्यगतिं प्रति, गतागतं कामकामा लभन्ते इत्यादि । यस्मादुदाहृतवाक्यजातं न स्वार्थे प्रमाणम् । तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत इति तर्कानुगृहीतश्रुतिवाक्यैः कर्मफलस्यानित्यत्वाभिधानात् । तत्तस्माद्धो उपमन्त्रिन् प्रपञ्चानित्यत्वब्रह्मनित्यत्वप्रतिपादकान्तरङ्गमन्त्रार्थज्ञ वयमिवान्यवार्ता न भण्यताम् । अन्यस्य ब्रह्मातिरिक्तस्याऽनात्मवर्गस्य वार्ताऽपि न कथ्यताम् । यथा वयं तदतिरिक्तं न प्रतिपादयामस्तद्वत् । तथाच श्रुतिः— प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म, एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति । यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सर्वं प्राणैश्च सर्वैः, तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ । नानुध्यायेद् बहूञ्छब्दान् वाचो विग्लापनं हि तदित्याद्या ॥१९॥

एवं हस्तक्षेपादन्यत्र गतं, तत्रैव भ्रमन्तं वा विह्वलत्वादपश्यन्ती, अहोऽसौ मदुक्तं स्वस्वामिन आवेदयितुं मथुरायां गतः । भवतु । द्रष्टव्यम् । मत्प्रियस्तन्निवेदितान्मदुक्तोपालम्भानाकर्ण्य मामुपेक्षते, किं वा मदनुनयार्थमन्यं तमेव वा प्रेषयति, स्वयमेव वा ससम्भ्रममायातीत्यादि मनसि भावयन्ती तदागमनपथि दत्तदृष्टिः पुनरपि सौरभात् स्वमन्निधावागच्छन्तमवलोक्य क्षान्त्यादिगुणगणाकरेण प्रेमभराक्रान्तस्वान्तेन मत्कान्तेन प्रेषितः स एव पुनरागत इति मत्वा विकसितवदनारविन्दा सादरमाह ।

प्रियसख पुनरागाः प्रेयसा प्रेषितः किं
वरय किमवरुन्धे माननीयोऽसि मेऽङ्ग ॥
नयसि कथमिहास्मान् दुस्त्यजद्वन्द्वपार्श्वं
सततमुरसि सौम्य श्रीवधूः साकमास्ते ॥ २० ॥

प्रियसखेति ॥ हे मत्प्रियस्य श्रीकृष्णस्य सखे, अन्यथा मां प्रति त्वामेव पुनः पुनः किमिति प्रेषयेदिति भावः। प्रेयसा प्रेषितस्त्वं किं पुनरागतोऽसि । मत्प्रेमातिरेकदत्तदृष्टिर्मदपराधानगणयित्वा मत्प्रेयाँस्त्वां पुनः प्रेषितवान्, किं वा मया तिरस्कृतत्त्वादितो गतः स्वसौजन्येन मदपराधमुपेक्ष्य सन्देशान् गृहीत्वा गन्तव्यमिति विचार्य मार्गमध्यात् परावृत्त स्वयमेवागतोऽसीति किंशब्दार्थः । उभयथाऽपि मानार्हस्त्वमित्याह ॥ वरयेति ॥ अङ्ग हे प्रियदूत, भवान् किमवरुन्धे प्राप्तुमिच्छसि यदिच्छसि तदेव वरय वृणीष्व त्वन्मनसेप्सितं वस्त्वहं दातुमिच्छामि । यतो मम माननीयः पूज्योऽसि । तत्सन्निधौ त्वमेव मुख्यः । इतः पूजामप्राप्य, प्रत्युततिरस्कारमवाप्यापि तत्र गतस्त्वं न मद्वत्तोपालम्भानुक्तवान्, किन्तु मत्प्रेमातिरेकमेवाऽऽवेदितवानतः सज्जनशिरोमणिश्चेति पुनस्त्वदागमनेन मयाऽवगतमतो यथेष्टत्वत्पूजां कर्तुं मम स्पृहा महती वर्तत इति भावः । यदि वाञ्छितं वरं दातुं प्रवृत्ताऽसिचेत्तर्हि प्रेयसा सार्द्धं त्वत्समागममेवाहं प्रार्थये । स्वामिकार्यमेव ममेप्सितम् । तत्सिद्ध्यनन्तरमनुग्रहेण यद्दास्यसि तद् ग्रहीष्यामीतिचेत्तत्राह ॥ नयसीति ॥ अहो त्वां तत्र नीत्वा मथुरायां तेन सार्द्धं संयोजयितुमिच्छामि, परं भयादेवं न ब्रवीमि । भगवत्या सर्वज्ञया मदभिप्रायानुरोधेनेदमुक्तमत आशु तत्र चलनीयमितिचेत्तत्राह ॥ कथमिति ॥ अस्मान्नेतुमेव त्वमागतश्चेत्तदुपकरणं शिबिकादिकं किमर्थं नाऽऽनीतवानसि । तद्विना च कथमस्मान्नयसीति भावः। किञ्चेह गोकुले सतीः। तथाच निरोधस्थाने स्थिता वयं, तत्रापि बह्व्यस्त्वं चैकोऽतोऽस्मान्नेतुमशक्तोऽसीति भावः । ननु यद्यप्यहं भवतीर्नेतुमशक्तस्तथापि भवत्यो गन्तुं शक्ता इतिचेत् सत्यं, तथापि पुरस्त्रीवेष्टितं द्रष्टुं न शक्ता इत्याशयेनाह ॥

दुस्त्यजेति ॥ दुस्त्यजं द्वन्द्वं तत्रत्यस्त्रीभिर्मिथुनीभावो येन तस्य त्वत्स्वामिनः पार्श्वम् । ननु त्वां प्रतीक्षन्नेकाकी स वर्तते, सशपथं ब्रवीमीतिचेत् सन्तु ताः, नास्ति ताभ्यो मम भयं, मद्गमने ता वराक्यः स्वत एव धिक्कृताः स्युस्तथापि तेन सार्द्धमित एव गता श्रीस्तं रमयतीति सेर्ष्यमाह ॥ सततमिति ॥ श्रीरेव वधूः साकं सहैव, तत्रापि सततं तत्राप्युरसि श्रियो नानारूपग्रहणसामर्थ्यात् । कृष्णो यदा अन्याभिः स्त्रीभिः क्रीडते पुरुषेषु वा तिष्ठति तदा रेखारूपेण सा तदुरसि तिष्ठति । यदा रहसि स वर्तते तदा प्रकटमेव वधूर्भूत्वा तं रमयतीति तत्साहित्यं सर्वदा तस्य वर्ततेऽतोऽस्मद्गमनं तत्र नोचितमिति भावः । यद्वा याऽस्मज्जयाद् रेखारूपेण तिरोहिता आसीत् सा श्रीः इदानीं निर्भयस्थाने स्थितत्वात् कं सुखं यथा स्यात्तथा वधूर्भूत्वा सततमुरसि आस्ते । इदानीं प्राप्ताधिकारायास्तस्या अस्माकं भयमतस्तत्सार्द्धमस्मत्समागमं कर्तुमिच्छसिचेत् तमेवात्राऽऽनयेति भावः । यद्वा, प्रेयसा त्वत्समागममहमिच्छामीतिचेत् किमस्माँस्तत्र प्रापयसि, किं वा तमत्रेति विकल्प्य, नाद्यः । अस्माकं मानिनीनां तत्र गमनायोगादित्याद्यपक्षाऽयोगमभिप्रेत्य द्वितीयं तं प्रतिक्षिपति ॥ नयसीति ॥ इहेत्युक्ते अस्मिन् व्रजे अस्मान् प्रति दुस्त्यजद्वन्द्वपार्श्वं कथं प्रापयसि । दुस्त्यजं द्वन्द्वपार्श्वं यस्य तम् । द्वन्द्वसम्बन्धस्य दुस्त्यजत्वात् तत्साहित्येनास्मान् प्रति आगमनस्य च दुर्घटत्वात् कथमित्यर्थः । ननु भवत्यर्थे सर्वमपि तस्य सुत्यजमिति चेत्तत्राह ॥ सततमिति ॥ हे सौम्य, साधु त्वं पक्षपातं विहायैतत् सर्वं ज्ञातुं योग्योऽसीति सम्बोधनाऽऽशयः ॥ दुस्त्यजद्वन्द्वभावस्य प्राप्तिर्नार्हेत्यनुद्धतम * दूतसम्माननेनोक्तं यत्र स प्रतिजल्पक इत्युक्तत्वादत्र प्रतिजल्पः ॥

उद्धवपक्षे च भगवतो दोषान् श्रुत्वा तत उत्थाय गतः । गते

च तस्मिन्मूर्छितायां तस्यां पुनरागतः । निवृत्तमूर्च्छां पुनरागतं तमव-
लोक्याह ॥ प्रियसखेति ॥ यद्वा स्वाम्युपालम्भानाकर्ण्य खिन्नचित्तं
तमालक्ष्याश्वासयति ॥ हे प्रियसखेति ॥ प्रियसन्निधावितोऽप्यधिकं
वयं वक्तुं शक्ताः । सोऽपि तच्छ्रुत्वा प्रत्युत्तरं दातुं मनसि खेदं वा
दातुं न समर्थः । तस्य सखा त्वं किमिति खिन्नोऽसीति सम्बो-
धनाऽऽशयः । वयं तत्रोपरि प्रसन्नाः, यतस्त्वमस्मान् प्रत्येवागतः ।
पूर्वमिदमबुद्ध्वैवमुक्तमित्याह ॥ पुनरिति ॥ पित्रोः प्रियचिकी-
र्षया प्रेषितो नागतोऽसि । किं पुनः, किन्तु अस्मत्प्रियचिकीर्षया
प्रेयसा प्रेषित आगतोऽसि । तथात्वे सति, वरयेत्यादि पूर्ववत् ॥

श्रुतिपक्षे तु– यद्वैमुख्येन कृतकर्मणां फलभोगाय संसृतिचक्रे
प्रवेशितोऽसि, सर्वभावेन तदाश्रयणेनैव तव मोक्षो, नान्यथेत्या-
ह ॥ हे अङ्ग, प्रियसखेन प्रेयसा परमेश्वरेण प्रेषितः प्रेरितः किमपि
अनिर्वचनीयं संसृतिचक्रमागतः आसमन्तात् प्राप्तवानासि । तमेव
वरय शरणत्वेनाश्रय, किमवरुन्धे संसारपाताय तदतिरिक्तं भवान्
किमभिलषितवान् । तमु ह्येष एव साधु कर्म कारयति यमेभ्यो
लोकेभ्य उन्निनीषति । तमु ह्येष एवाऽसाधु कर्म कारयति
यमेभ्यो लोकेभ्यो अधो निनीषति । तं ह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमहं प्रपद्ये । अज्ञो जन्तुरनीशोऽयमात्मनः सुख-
दुःखयोः ॥ ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥ ईश्वरः
सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढा-
नि मायया ॥ तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्
परां शान्तिं स्थानं प्राप्स्यसि शाश्वतमित्यादिश्रुतिस्मृतिभ्यः ।
एवञ्चेदनन्यभावेन भगवदाराधने त्वं प्रवृत्तस्तदा मम, हे सौम्य मा-
ननीयः । अधिकारिसंपत्संपत्त्या मदर्थविचारतत्फलप्राप्तियोग्यः ।
अन्यथा तु नास्ति मोक्षो, नापि भोग इत्याह ॥ कथमिति ॥ तत्त्व-

ज्ञानाऽन्तरङ्गसाधनभगवद्भक्तिलभ्यभगवत्प्रसादाऽभावे इह स्वरूप-भूतपरमात्मनि समन्विता अस्मान् प्रति दुस्त्यजद्वन्द्वपार्श्वं मनः कथं नयसि । द्वन्द्वं रहस्ये कलहे मिथुने पार्श्वमान्तिके * कक्षाम्रव-यवे पापे युग्मे पशुगणेऽपि चेति कोशाद् दुस्त्यजे द्वन्द्वपार्श्वे कलहपापे येन तत् । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शि-भिरित्यादिश्रुत्या शुद्धस्यैकाऽग्रमनसो ब्रह्मसाक्षात्कारकरणत्वा-ऽभिधानात् । निष्कामकर्मभगवद्ध्यानाविनिर्मुक्तं कलहादिदोषा-ऽऽविलं यन्मनः, तेन क्रियमाणो वेदान्तविचारो न फलाय कल्प-त इति भावः । तथा श्रीर्वधूः साकं सहैव तत्राऽपि सततमुरस्येवा-स्ते । यद्वा, या सर्वैर्भोगार्थिभिरभिलष्यते सा श्रीरपि वधूः कं सुखं यथा स्यात्तथा तस्य भगवत उरस्येव सततमास्ते । तथाच भगव-दनुग्रहं विना कथं तत्प्रसादस्तम् ऋते च कथं भोगः । तस्माद्भोग-मोक्षार्थिभिर्भगवान् वासुदेव एव सर्वभावेनाऽनुक्षणम् आराधनीय इति भावः ॥ २० ॥

ननु युष्माँस्तत्र नेष्यामीत्यङ्गीकृतवन्तमिव मत्वाह ।

अपि बत मधुपुर्यामार्यपुत्रोऽधुनास्ते
स्मरति सपितृगेहान् सौम्य बन्धूँश्च गोपान् ॥
क्वचिदपि स कथां नः किङ्करीणां गृणीते
भुजमगरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु ॥ २१ ॥

अपीति ॥ सम्भावनायामपिः । बतेति हर्षे । उपनीतो भ-गवान् विद्याध्ययनार्थं गत इति श्रुतम् । तत आगत्याधुना आर्यस्य नन्दस्य वसुदेवस्य वा पुत्रो मधुपुर्यामास्ते ? । भर्तृत्वेन नामाग्रह-णम् । अस्मद्गमनपर्यन्तं तत्र स्थास्यति न वेति सन्देहाद्वा प्रश्नः । विद्यमानोऽप्यन्याभिनिविष्टश्चेन्नास्मत्सुखावह इति स्वस्मिन्नभिनि-

षेशजिज्ञासार्थं पृच्छति ॥ स्मरतीति ॥ यद्वा, अहो कामाक्रान्त-स्वान्तत्वादुन्मत्तया मया वृथैवैतत् प्रलपितं, प्रष्टव्यं तु न पृष्टमिति पश्चात्तापेन सरलहृदया सती ससम्भ्रमं पृच्छति ॥ अपि बतेति ॥ बतेत्याश्चर्ये । आर्यपुत्रो मधुपुर्यामास्ते किम् ? । अहो अस्माभिर्ज्ञातं ततोऽप्यन्यत्र गतः । नो चेन्निकटस्थाने वसन् किमिति स्वयं नाऽऽगच्छेत्, सन्देशहरं किंस्विदेतावत्कालपर्यन्तं न प्रेषयेत् । तथाचाऽस्मदृष्ट्या तत्र नास्त्येवेति व्यङ्ग्यम् । यद्वा, आर्यस्य वसुदेवस्य पुत्रः सन्नधुना मधुपुर्यामेवास्ते ? किं वा नन्दरायपुत्रत्वं परित्यज्य वसुदेवपुत्रः सन् यथेतो मथुरायां गतस्तथा तत्पुत्रत्वमप्यपहायाऽन्यपुत्रः संस्ततोऽप्यन्यत्र गत इति व्यङ्ग्यम् । यद्वा, तत्र तस्य स्थितौ निकटवर्त्तित्वात् तदागमनस्यापि सम्भावना वर्तत इति कृत्वैवं पृच्छामीति भावः । यद्वा सुखमास्त इति वक्तव्ये तत्स्थितिमात्रं पृच्छन्त्या अयमाशयः । अस्मत्प्रेमातिरेकस्मरणव्याकुलमानसोऽसौ तत्रत्यानुरोधेनैव तत्रास्ते, न सुखपूर्वकमित्यहं जानामि । यत आर्यस्यातिसरलस्य वसुदेवादिकृतं प्रतारणमजानतस्तदेकप्राणस्य पुत्रः । अहो मत्पिताऽपि व्रजं प्रति मां नेतुं नाऽशकत् । उपायान्तरं च नास्त्यतः किं कर्तव्यमित्युत्कण्ठया व्याकुलमना यथाकथञ्चिच्चित्तसमाधानाय त्वां प्रेषितवान् । अहो प्राणप्रियपुत्रपरित्यागपरिणामाऽज्ञानरूपसरलता श्रीनन्दरायस्य न ज्ञाता, नोचेत्तन्माता स्वपुत्रं कण्ठे कुर्वत्येव मथुरामयास्यत्, तामनु गोपिकाश्रेण्यश्चेति व्रजराजाऽऽर्यत्वमेवाऽस्माकमनर्थकरं जातमिति । अतः पितृगेहान् स्मरति । पितुरतिसरलस्य वसुदेवेन महाप्रतारकेणाच्छिद्य गृहीतपुत्रस्य व्रजमागत्य मूर्च्छया निपतितस्य गेहान् कोशागारधनागारादीन् संप्रत्यमार्जितालिप्तत्वेन तृणधूलिपत्रलूतातन्तुवृतान् शून्यानिव तान् स्मरति कच्चित् । हे सौम्य, स्वाविरहव्या-

कुलमानसान् मूर्छितप्रायान् बन्धूनुपनन्दादीन्, गोपान् श्रीदाम-प्रभृतीन् । तव दर्शनेन किञ्चित्तापोपशमनं जातमिति सम्बोधना-ऽऽशयः । यद्वा सौम्याश्च ते बन्धवश्चेति स्मरणयोग्यतासूचनाय विशेषणम् । चकाराद् गोगोवर्द्धनादिसंग्रहः । सः अस्मत्प्राणनाथः क्वचिद् देशे काले वा, उपहासकथायां लौकिककथायां वा नः अस्माकं कथां गृणीते स्वमुखेन कथयति । तत्र योग्यतामाह ॥ किङ्करीणामिति ॥ बहुधा कृतसेवानाम् अस्मद्वत् कैङ्कर्य्यं कर्तुमसमर्थाभिः पुरस्त्रीभिरुदासीनं तमालक्ष्यौदासीन्यकारणे पृष्टे अस्माकं किङ्करीणां कथां गृणीत इति भावः । वार्ताकथनेन स्मृत्यात्मिकां तदन्तःकरणवृत्तिं विज्ञातवानसि । अतः कथयेति भावः । यद्वा अस्मान्नेतुं किमर्थं त्वमागतः, स एव कुतो नागत इत्याशयेनाह ॥ अपीति ॥ बतेति खेदे, विस्मये वा । आर्यपुत्रोऽधुनापि मधुपुर्य्यामेवास्ते !! । कंससंहाररूपस्य जातत्वादेतावत्पर्य्यन्तं तत्र किमर्थं स्थितः, अत्र कुतो नागतः । आर्यपुत्रोऽपि मधुपुर्यामपीत्यनेनार्यस्य पितुरत्राऽऽगतत्वान्मद्यपानादिविनिर्मुक्तस्य पुत्रत्वाच्च मद्यपप्रधाने पुरे किमर्थमास्त इति ध्वनितम् । ननु तदीयं चित्तं तत्र संलग्नम्, अतो नागत इतिचेन्न । तदीयं मनोऽहं जानाम्यतोऽत्र स्थिताऽपि तदन्तःकरणवृत्तिं ब्रवीमीत्याशयेनाह ॥ स्मरतीति ॥ पितृगेहतुल्यानां स्वक्रीडायोग्यस्थानानाम् अलाभेन पितृगेहान् स्मरति । सर्वदा यैर्लालितो यैश्च सार्द्धं विविधाः क्रीडाः कृतवाँस्तान् बन्धून् गोपाँश्च स्मरति । क्वचिदपि किङ्करीणां नः कथां संगृणीते । तथाच पितृगेहादिविरहव्याकुलचित्त एव तत्रास्त इत्यहं जानामि । दुःखितस्य तत्र निरोधो भवतां नोचित इति सूचनाय संबोधयति ॥ हे सौम्येति ॥ यद्वा, स आर्यपुत्रोऽधुना मधुपुर्यामास्त इत्येव, न तु तात्स्थित्या तस्य तत्रत्यानां वा

कश्चिदुपकारोऽस्ति । सर्वदा पितृगेहादिस्मरणादिना व्याकुलचित्तत्वादित्याशयेनाह ॥ स्मरतीति ॥ यद्वा मधुपुर्यां प्रियस्य स्थितिं जानत्यपि, प्रयोजनाभावात् तत्रास्ति न वेति न जानामीति स्वगाम्भीर्यद्योतनायाजानतीव पृच्छति ॥ मधुपुर्यामिति ॥ सर्वमेवेत्यङ्गीकृतवन्तमिवालक्ष्याह ॥ भुजमिति ॥ तादृशक्रीडायोग्यस्थानानां तथाविधबन्धुगोपादीनां वनमालागुम्फनवीट्यादिनिर्माणगीतनृत्यरससौन्दर्यलावण्यवैदग्ध्यप्रश्नोत्तरविलाससंभोगलीलारासक्रीडाविलासादिसहस्रगुणाढ्यानां व्रजाङ्गनानां चात्राऽदर्शनान्मम मनो नात्र लगति । श्वः परश्वो वा व्रजमेवाहं गन्तेत्युक्त्वाऽत्रागत्य अगरुसुगन्धं भुजमस्माकं मूर्ध्नि कदा अधास्यत् धास्यति । तेन च समाश्वासयेत् । भोः प्राणप्रेयस्यः सशपथमहं ब्रवीमीतः परं भवतीस्त्यक्त्वा क्वापि न यास्यामि, लोकत्रये युष्मत्सादृश्यगन्धलेशस्याऽप्यनुपलम्भादिति । पूर्वमपि तिरोहितः पुनश्चाविर्भूत इति कृत्वा तद्वत्तदागमनाऽऽशा मम महती वर्तत इति भावः । यत्राऽऽर्जवात् सगाम्भीर्यं सदैन्यं सहचापलम् * सोत्कण्ठं च हरिः पृष्टः स सुजल्पो निगद्यत इत्युक्तत्वादत्रसुजल्पः ॥

उद्धवपक्षेऽपि समानम् ॥

श्रुतिपक्षे, अथ स्वस्वरूपभूतं परमात्मानं विस्मृत्य देहादावहम्ममाऽभिमानवन्तं जीवात्मानमालक्ष्य सखेदमाह ॥ अपीति ॥ कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः, ममैवांशो जीवलोके जीवभूतः सनातन इत्यादिश्रुतिस्मृतिभ्याम् आर्यस्य परमात्मनः पुत्रः अंश इवांशभवनादधुना अज्ञानाऽवस्थायां मधुपुर्यां मधुलवसदृशविषयरसोपभोगायतनभूतदेहलक्षणनवद्वारनगर्याम् आस्ते । अहमेवेति तादात्म्याध्यासेन तद्रूपो भूत्वा तिष्ठति । मधुपुर्यामपीत्यपिशब्दोऽत्यन्तविलक्षणेन देहेन तादात्म्यमत्यन्ताऽनुचितमिति

द्योतयति । अधुनापि अधिकारिशरीरं लब्ध्वापि देहादितादात्म्यं न त्यजसीति वाऽपिशब्दार्थः । आर्यस्य सर्वत्र पूर्णस्य परमात्मनः पुत्रः तदात्मभूतः । आत्मा वै पुत्रनामासीति श्रुतेः । तथाभूतोऽपि किं देहमात्रपरिच्छिन्नाभिमानेन परिच्छेदं प्राप्तोऽसीति वाऽपिशब्दार्थः । तदनुरूपैव तव प्रवृत्तिर्दृश्यत इत्याह ॥ स्मरतीति ॥ परमात्मना निर्मितान् गेहान् गृहान् भूरादिलोकाँश्च स्मरति ॥ हे सौम्य बन्धून् सहोदरादीन् बान्धवान्, चकाराद्भार्यापुत्रादीन्, गोपान् तत्तद्विषयसंभोगार्थं तत्तदिन्द्रियाधिष्ठातृदेवान् स्मरति, न तु स्वस्वरूपभूतं परमात्मानं कदाप्यनुसंधत्ते । क्वचिदपि, अहो देहाद्विलक्षणोऽहं स्वकर्माऽनुसारेण स्वर्गं नरकं वा भोक्ष्ये इति विद्वद्दशायामपि नः अस्माकं किङ्करीणां, स्वर्गकामो यजेतेत्यादिकानां श्रुतीनां कथां गृणीते, न त्वस्माकम् । अतोऽस्माकं महत्युत्कण्ठा वर्तते । अगरुसुगन्धं तत्स्थानीयसाधनचतुष्टयसम्पत्तिसंपन्नं भुजस्थानीयमन्तःकरणं श्रुतीनां मूर्ध्नि मस्तके कदा अधास्यत् धास्यति । यद्वा प्राप्ताधिकारिशरीरं जीवात्मानमालक्ष्येदं शरीरमासाद्य स्वोद्धार एव त्वया कर्तव्य इति ससम्भ्रममाह ॥ अपीति ॥ अधुना आर्यपुत्रो भवान् ब्रह्मानन्दपर्यन्तमधुमात्रसाधनभूतायां मनुष्यशरीरलक्षणपुर्याम् आस्ते । अपि बतेत्यलभ्यलाभोक्तिः । तत्रापि सर्वविवेके समर्थोऽसीत्याह ॥ स्मरतीति ॥ सर्वयोग्यतां त्वयि दृष्ट्वाऽहमत्युत्कण्ठितास्मीत्याह ॥ भुजमिति ॥ यद्वा हितोपदेशमाकर्ण्य देहाद्यभिमानं विहाय भगवदाराधनपरायणं जीवात्मानमालक्ष्य तत्पराक्रमानुवादपूर्वकमुर्वरितग्रहणे स्वोत्कण्ठामाविष्करोति ॥ अपि बतेति, हर्षे । मधुपुर्यां सर्वासक्तिस्थानभूतायामपि देहलक्षणपुर्यामार्यपुत्रो भगवदंशभूतोऽहं देहादिविलक्षणो न नगरस्थानीयदेहस्वरूप इत्येवमास्ते । तत्र स्थितिरपि तत्र न भोगायाऽपि तु

भगवदाराधनायेत्याह ॥ स्मरतीति ॥ पितुः परमेश्वरस्य गेहान् मथुराद्वारवत्यादिरूपान्, यद्वा, इमान् देहान् चतुर्दशभुवनानि च पितुर्गेहान् देवालयभूतान् स्मरति। हे सौम्य, तद्बन्धून् बलदेवादींश्चकारान्नन्दादीन् गोपान् श्रीदामप्रमुखान् स्मरति। किङ्करीणां गोपाङ्गनानां कथां च स भवान् क्वचिद् गृणीते । यद्वा, बन्धून् गोपात्मकान् स्मरति, नोऽस्माकं श्रुतीनां मध्ये किङ्करीणां भगवत्कैङ्कर्यप्रतिपादिकानाम् । सर्वदा भगवत्परायणो भवानस्ति। अतोऽवशिष्टमपि सम्पादयतु । अगरुसुगन्धं भुजं निरुक्तमन्तःकरणं श्रुतिमस्तके कदाऽधास्यत् ॥ २१ ॥

एवं भगवत्प्रियावाक्याऽमृतपानासक्तमानसः किञ्चिदपि वक्तुमवसरमलभमानस्तत्प्रेमातिरेकमवलोक्यातिचकितहृदयो हा हेत्यादि मनस्येव वदँस्तद्वचनानि शृण्वँस्तूष्णीमास्थितः। भगवत्प्रिया च इतः परं वक्तुमक्षमाऽवशिष्टसख्यश्च चित्रवत् तूष्णीं स्थिताः। तदनन्तरं तदाश्वासनार्थमुद्धव उवाचेत्याह ।

श्रीशुक उवाच ॥

अथोद्धवो निशम्यैवं कृष्णदर्शनलालसाः ॥
सान्त्वयन् प्रियसन्देशैर्गोपीरिदमभाषत ॥ २२ ॥

अथेति ॥ एवं विरहव्याकुलमानसानां लोकोत्तरप्रेमाक्रान्तानामुपालम्भवाक्यान्याकर्ण्योद्धवः कृष्णदर्शनलालसा गोपीः प्रियसन्देशैः सान्त्वयन्निदं वक्ष्यमाणमभाषत । उत् उत्कृष्टः सर्वोत्तमः श्रीकृष्णो धवः स्वामी यस्य स तथा । भगवद्भृत्यस्य भगवत्प्रियाणामाश्वासने प्रवृत्तिरुचितेति भावः । चित्तमाकृष्य गतस्य कृष्णस्य दर्शने लालसा यासां ताः । ननु किमिति मथुरायां गत्वा दर्शनं न कृतवत्य इत्यत आह ॥ गोपीः गोपपराधीनास्तत्र

गन्तुमशक्ताः। यद्वा, गोपस्य कृष्णस्येमाः गोपकृष्णदर्शनाभिलाषाः, न तु यदुपतिकृष्णदर्शनलालसाः । सान्त्वयन्, तत्रापि प्रियस्य कृष्णस्य संदेशैर्न तु स्वतः । यद्वा प्रियसंदेशैर्न त्वाऽऽयाति प्रिय इत्युक्त्या । अत एव सान्त्वयन्न तु हर्षयन् । इदं वक्ष्यमाणमऽब्रवीत् ॥ २२ ॥

तदाह ।

उद्धव उवाच ॥

अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ॥
वासुदेवे भगवति यासामित्यर्पितं मनः ॥ २३ ॥

अहो यूयमिति ॥ वसन्ति भूतान्यस्मिन्निति वासुः । वसतीति वा वासुः । स चाऽसौ देवश्च वासुदेवस्तस्मिन् भगवति षड्गुणैश्वर्यसंपन्ने यासामिति इत्थं मनः समर्पितं ता यूयं, स्म नूनं कृतार्थाः । स्मेति प्रसिद्धमिति वा । किञ्च भवत्य एवंविधप्रेमाऽतिरेकवत्यो लोकपूजिताः । अस्मदादिभिर्लोकैः पूज्यतां गताः । यं लब्ध्वा चापरं लाभं मन्यते नाधिकं तत इत्युक्तेर्वासुदेवे सर्वात्मभूते परब्रह्मणि अर्पितमानसत्वात् । पूर्णार्थाः । भगवति ब्रह्मादिपूज्यपादपाथोरुहे तस्मिन्नासक्तचित्तत्वाल्लोकपूजिताः। तस्मात् स्वात्मानं दुःखितं हीनं च माऽवगच्छतेति भावः ॥ २३ ॥

ननु जारबुद्ध्या भगवति वासुदेवे समासक्तचेतसां दानव्रतादिभक्तिसाधनविधुराणामस्माकं कथं पूर्णार्थता, कथं वा लोकपूज्यतेत्याशङ्क्य, येनकेनाऽप्युपायेन मनः कृष्णे निवेशयेदित्युक्तत्वात् कृष्णे मनःसन्निवेशरूपभक्तेः फलस्य साधनतयोपायसार्थस्यानुज्ञातत्वादेकेनोपायेन तस्य जातत्वान्नोपायान्तरान्वेषणं युक्तमप्रयोजकत्वादित्याशयेनाह ।

दानव्रततपोहोमजपस्वाध्यायसँय्यमैः ॥
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥२४॥

दानेति ॥ दानं तुलापुरुषादि, व्रतमेकादश्युपवासादि, तपः कृच्छ्रचान्द्रायणादि, होमोऽग्निहोत्रादिः, जपः प्रणवाऽऽदिमन्त्राणां मनसाऽऽवृत्तिः, स्वाध्यायो वेदाध्ययनम् । विविधैर्वापीकूपतटाकाऽऽरामादिनिर्माणप्रमुखैः श्रेयःसाधनैः कृष्णे भक्तिर्हि साध्यते उत्पाद्यते । हिः प्रसिद्धिं द्योतयति । यद्यपि, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति श्रुत्या यज्ञादीनां संयोगपृथक्त्वन्यायेन विविदिषायां वेदनस्य वा साधनत्वमभिहितं, तथापि, भक्त्या लभ्यस्त्वनन्यया, भक्त्या मामभिजानातीत्यादिवचनानामेतस्य चानुरोधेन भक्तिद्वारा तेषां तत्साधनत्वं व्याख्येयम् । तथाच दानादीनां भक्तिरेव फलम् । सा च जन्माऽन्तरेष्वनुष्ठितदानाऽऽदिसर्वसाधनानां युष्माकमेवंविधप्रेमाऽतिरेकवतीनां कृतार्थादौ नास्ति संशय इति भावः ॥ २४ ॥

नन्वस्माकं व्रजराजकुमारविषयककामवतीनां कथं भक्तिमत्त्वं कामस्य तदुपायत्वानभिधानादितिचेत्, तद्विषयककामस्य दानादिभिरपि दुर्लभत्वात् तज्जन्येयं भक्तिरनुत्तमेत्याशयेनाह ।

भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ॥
भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥२५॥

भगवतीति ॥ उत्तमैर्नारदादिभिः श्लोक्यते स्तूयते इत्युत्तमश्लोकस्तस्मिन् । अनेन, भवतीभिः स निन्द्यते, भवत्यस्तु तेन स्तूयन्त इति महान् विशेष इति ध्वनितम् । भगवानितरेषां भगवान्, भवतीनां तु प्रीतिमानिति सूचनाय— भगवतीति ॥
दिष्ट्या, अहो भाग्यमस्मदादीनां, याभिर्भवतीभिरेवंविधा भक्तिः

प्रवर्तिता आविर्हिता भक्तिरपि प्रकटिता । तासां दर्शनादिना अस्मदादयो भाग्यातिरेकवन्तः सम्पन्नाः । युष्मद्भाग्यं तु वक्तुमऽशक्यमित्यर्थः । नचाऽसौ शास्त्राविहितत्वाल्लोकाऽप्रसिद्धत्वाच्च निकृष्टेति भ्रमितव्यम् । उक्तहेतुभ्यः सर्वोत्कृष्टत्वादित्याह ॥ अनुत्तमा, न विद्यते उत्तमा यस्याः सा । यतो मुनीनां दानादिसाधनकदम्बवतामपि दुर्लभा । तदधिकाराभावात् । अत्रदमवधेयम् । उपायपूर्वकं भगवति मनःस्थिरीकरणं भक्तिः । सा द्वेधा—विहिता, अविहिता च । तत्राद्या द्वेधा— मिश्रा, शुद्धा च । मिश्रा त्रेधा—कर्ममिश्रा, कर्मज्ञानमिश्रा, ज्ञानमिश्रा च । कर्ममिश्रा त्रेधा—तामसी, राजसी, सात्त्विकी चेति । तत्र तामसी त्रेधा— हिंसार्था दम्भार्था, मात्सर्य्यार्था चेति । राजसी च त्रेधा—विषयार्था, यशोऽर्था, ऐश्वर्यार्था च । सात्त्विकी च त्रेधा-कर्मक्षयार्था, विष्णुप्रीतिसिद्ध्यर्था, विधिसिद्ध्यर्था च । कर्मज्ञानमिश्रा त्रेधा— उत्तमा, मध्यमा, अधमा चेति । ज्ञानमिश्रा त्वेकधा । १३ । गुणकार्याणामनुपलम्भान्निर्गुणा शुद्धाऽप्येकधा अहैतुक्यऽव्यवहिता कर्मज्ञानाभ्याममिश्रत्वाच्छुद्धा । एवं विहितायाश्चतुर्दशभेदाः । अविहिताऽपि चतुर्धा— कामजा, द्वेषजा, भयजा, स्नेहजा चेति । तत्र कर्ममिश्रा नव गृहस्थानाम् । कर्मज्ञानमिश्रास्तिस्रो वनस्थानां, ज्ञानमिश्रैका भिक्षुकाणाम् । अहैतुक्येका सर्वेषाम् । कामजा गोप्यादिसमानाम् । द्वेषजा शिशुपालादितुल्यानाम् । भयजा कंसादिसमानानाम् । स्नेहजा पाण्डवादिसदृशानाम् । एवं भक्तेरष्टादश भेदाः । तत्र सर्वोत्कृष्टा कामजा । अन्येषु तद्भेदेषु तथाविधमनःस्थिरीकरणस्याऽलभ्यत्वादिति ॥ २९ ॥

स्वकृत इह विसृष्टा इति पश्चात्तापो न विधेयस्तेनैव कृतार्थत्वसम्पादनादित्याह ।

दिष्ट्या पुत्रान् पतीन् देहान् स्वजनान् भवनानि च ॥
हित्वा वृणीत यूयं तु कृष्णाख्यं पुरुषं परम् ॥ २६ ॥

दिष्ट्येति ॥ देहाभिमानस्य देहव्यापाराणां च परित्यागाद्देहस्यागः । अत एव मथुरां न गच्छन्ति पुत्रादीन् हित्वा तद्योगक्षेमाद्यनुसन्धानं विहाय यत्कृष्णाख्यं परं पुरुषं वृणीत तद्दिष्ट्या महद्भाग्यम् । पुत्राद्यासक्तिरेव भगवदासक्तौ प्रतिबन्धिका । तदासक्तित्यागश्चातिदुष्करः । तत्रापि यूयं स्त्रियः । यासां पुत्राद्यासक्तित्यागः परमदुष्करः । न तत्त्यागो वृथा, यतः परं सर्वोत्कृष्टं पुरुषं पूर्णं परमात्मानं वृणीत ॥

ननु स्त्रीणां स्वपुरुषत्यागः, परपुरुषस्वीकारोऽतिदोषावहत्वेन शास्त्रे प्रतिपादितः । भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमाययेत्यादिना भगवता च पतिशुश्रूषणादेरेव धर्मत्वेन निरूपित इत्याशङ्कानिवृत्त्यर्थमुक्तं कृष्णाख्यं सच्चिदानन्दाख्यम् । परमेश्वरस्यैव सर्वपतित्वात्तं विहाय पत्यादिशुश्रूषणस्य परमानर्थावहत्वात् पतिशुश्रूषणमपि वासुदेवबुद्ध्यैव श्रेयस्करं, किं पुनर्वक्तव्यं साक्षात्परब्रह्मासक्तिमतीनां भवतीनां माहात्म्यम् । यथा व्यभिचारिण्योऽपि पुनरासक्तिपूर्वकं स्वपतिशुश्रूषणात् कृतार्था भवन्ति तद्वत् स्वपतिकृष्णत्यागाद् व्यभिचारित्वं, तत्रैव पुनःसमासक्तिसम्पादनात् परमपतिव्रततेति भावः ॥ २६ ॥

ननु प्रियविरहानलज्वालामालाव्याकुलहृदयानां क्षणमात्रमपि स्वास्थ्याभावादुभयभ्रष्टानामस्माकं कुतस्त्यं कृतार्थत्वमित्याशङ्क्याह ।

सर्वात्मभावोऽधिकृतो भवतीनामधोक्षजे ॥
विरहेण महाभागा महान्मेऽनुग्रहः कृतः ॥ २७ ॥

सर्वात्मेति ॥ सर्वात्मना भाव एकान्तभक्तिः, अधिकृतः प्राप्तः । यद्वा सर्वोऽपि आत्मनोऽन्तःकरणस्य भावः प्रीतिभावं भवतीनामधोक्षज एवाऽधिकृत उत्तरोत्तरं वृद्धिं नेतुमारब्धः । भवतीनां साधनविधुराणां, तत्रापि बह्वीनां, तत्राप्यधः अक्षजं वृत्तिमात्रं यस्मात्तस्मिन् वृत्तिमात्रागोचरे परमात्मनि कामजस्तादृशो भावो विरहेण पुष्टिं गमिष्यति । अतो नायं विरहोऽपकारकः । अधो न क्षीयते जात्विति निरुक्त्या च सत्यस्वरूपे तस्मिन् पुष्टिं गतो भावः प्रियवियोगाभावाय फलिष्यतीति भावः । ननु साधनैर्विना कथमेवं जातं, कार्यमात्रस्य साधनसाध्यत्वनियमादित्याशङ्क्याह ॥ हे महाभागाः, पूर्वपुण्योत्थभाग्यवशादस्मिन् जन्मनि भगवद्भक्तिसाधनेषु प्रवृत्तिर्भवति । पूर्वजन्मनि सम्यगनुष्ठितसाधनानां तु महाभाग्यशालिनां नास्मिञ्जन्मनि साधनापेक्षा । तस्मान्महाभागानां भवतीनामिदानीन्तनसाधनाविरहेऽपि तथाभूतभावोत्पत्तौ न विरोध इति भावः । नचेदं प्रशंसामात्रमिति शङ्क्यम् । ममाऽप्येवंविधभावस्य साध्यत्वादिसाशयेनाह ॥ महानिति ॥ तादृशभावबोधनेन तत्रोत्कण्ठामुत्पादयन्तीभिर्भवतीभिर्ममोपरि महान् अपरिच्छिन्नोऽनुग्रहः कृत इत्यर्थः ॥ २७ ॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकमिति भगवद्वाक्याद् भगवद्भक्तिमूलं तत्त्वज्ञानं भगवद्वाक्यैर्वक्तुमवतारयति ।

श्रूयतां प्रियसंदेशो भवतीनां सुखावहः ॥
यमादायाऽऽगतो भद्रा अहं भर्तू रहस्करः ॥ २८ ॥

श्रूयतामिति ॥ ननु नेमानि स्तुतिवाक्यान्यस्माकं सुखजनकानि, प्रियेणास्मान् प्रति किञ्चिदुक्तं चेत्तर्हि तद्वदेति चेत्तदेवेदानीं निवेदयामीत्याह ॥ प्रियेति ॥ सम्यगुपदेशरूपः संदेशः अ-

वश्यकर्त्तव्यः । प्रियसंबन्धित्वाच्च प्रियवदादरणीयः । तत्रापि भवतीनां सर्वसाधनफलैरेवंविधप्रेमवतीनां सर्वामामस्मिन्नेव जन्मनि सुखावहो, न तु कष्टसाध्यसाधनेषु प्रवर्तनेन दुःखजनकः । अत एव यं संदेशं भगवन्मुखपद्मादादायाहमागतो, न त्वन्यो यः कश्चिन । यतोऽहं भर्तू रहस्करः रहस्यकार्यकर्ता । तथाच रहस्यमेवार्थं तेनोपदिष्टं वक्तुमहमागत इति भावः । यतो भवत्यो भद्राः कल्याणरूपिण्यस्तत्पात्रभूताः । एतेन, भर्त्रेह प्रेषित इत्याद्युपालम्भो निराकृतः । युष्मत्प्रियचिकीर्षया समागतोऽप्यहमेतद्गोपनार्थमादौ तत्पितृगृहं प्रविष्ट इत्याशयात् ॥ २८ ॥

तत्र सर्वोपालम्भकारणं, व्यसृजदकृतचेता इत्युक्तं त्यक्त्वा तद्गमनं भगवत्संदेशेन निराकरोति ।

भवतीनां वियोगो मे न हि सर्वात्मना क्वचित् ।
यथा भूतानि भूतेषु खं वाय्वग्निर्जलं मही ॥ २९ ॥

भवतीनामिति ॥ भवतीनां मे मया सार्द्धं वियोगो नास्तीति प्रतिज्ञा । तत्र हेतुगर्भितं विशेषणं, सर्वात्मनेति ॥ सर्वस्यात्मना उपादानकारणेन । तदनन्यत्वमारम्भणशब्दादिभ्य इति न्यायात् । तस्मात् कारणात् परमार्थतोऽनन्यत्वं, व्यतिरेकेणाभावः कार्यस्यावगम्यते । कुतः । यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्, वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिश्रुतिभ्यः । आदिशब्दादैतदात्म्यमिदं सर्वं, तत् सत्यं, स आत्मा तत्त्वमसि, सर्वं यदयमात्मा, ब्रह्मैवेदं सर्वम्, आत्मैवेदं सर्वं, नेह नानास्ति किञ्चनेत्येवमाद्यात्मैकत्वप्रतिपादनपरं वचनजातं गृह्यते । तथाच यथा घटाद्याकाशानां महाकाशाद्, यथाच मृगतृष्णोदकादीनाम् ऊषरादिभ्यो नान्यत्वं, दृष्टनष्टस्वरूपत्वात्, स्वरूपेणाऽनु-

पाच्यत्वादेवमस्य भोग्यभोक्त्रादिप्रपञ्चस्य ब्रह्मव्यतिरेकेणाभावः। ननु यथा वृक्षोऽनेकशाख एवमनेकाऽऽत्मकमनेकशक्तिप्रवृत्तियुक्तं ब्रह्मात एकत्वमनेकत्वमुभयमपि सत्यमेव । तथा मृदादिदृष्टान्ता अप्यस्मिन् पक्षे नाननुरूपा इतिचेन्न। मृत्तिकेत्येव सत्यं, तत्सत्यमिति दृष्टान्तदार्ष्टान्तिकयोः प्रकृतिमात्रस्य सत्यत्वाऽवधारणात् । तत्त्वमसीति शारीरस्य ब्रह्मभावोपदेशाच्च । उक्तमर्थं स्फोरयितुं सदृष्टान्तमाह ॥ यथेति ॥ भूतेषु स्थावरजङ्गमसंघातेषु महाभूतान्याकाशादीनि । वायुसहितोऽग्निर्वाय्वग्निः ॥ २९ ॥

तथाऽहं च मनःप्राणबुद्धीन्द्रियगुणाश्रयः ॥
आत्मन्येवात्मनात्मानं सृजे हन्म्यनुपालये ॥
आत्ममायानुभावेन भूतेन्द्रियगुणात्मना ॥ ३० ॥

यथा भूतेषु चराचरेषु स्वस्मिन् कल्पितनामरूपत्वाद्वाचारम्भणमात्रेषु प्रकृतित्वात् सत्याधिष्ठानरूपेण महाभूतानि वर्तन्ते तथाहमपि वाचारम्भणमात्राणां कार्यभूतानां मनआदीनां तत्कारणभूतानां सत्त्वादिगुणानां चाश्रयोऽधिष्ठानरूपत्वात् सत्त्वेनाऽनुगतः । ननु कार्यकारणयोरनुगतव्यावृत्तयोर्लोके भेदोपलम्भात् कथं सर्वकारणात् सर्वानुगतात् परमात्मनः सर्वस्याऽनन्यत्वमित्याशङ्क्याह ॥ आत्मन्येवेति ॥ वाचारम्भणमित्यादिश्रुत्या विकारमात्रस्य मिथ्यात्वबोधनात् तत्प्रतियोगिकतद्धर्मिकभेदाऽसत्यत्वावधारणात्तत्प्रतीतिर्भ्रान्तिनिबन्धनेति भावः । तथाच श्रुतिरेकोऽहं बहु स्यां, तदात्मानमकुरुतेत्याद्या । नन्वेकस्मिन्नाधारे कारणत्वकार्यत्वरूपविरुद्धधर्मसम्बन्धः कथं युज्यते इतिचेत्तत्राह ॥ भूतेति ॥ तथाच सत्तास्फूर्तिप्रदातृत्वेनाधारत्वं, भूताद्यात्मना कार्यत्वं, गुणात्मना कारणत्वमित्यवच्छेदभेदान्नास्तिविरोध इत्य-

ऽर्थः । नन्वसङ्गनिर्विकारस्य कथं तद्रूपतेतिचेत्तत्राह ॥ आत्ममायेति ॥ स्वात्मनः प्रकाशाल्लब्धसत्ताकाया मायाशक्तेरनुभावः= अन्यस्यान्यात्मनावभासनसामर्थ्यं तेन । तथाचानिर्वचनीयमायाकृतमेवानिर्वचनीयं ब्रह्मणस्तदात्मत्वमिति भावः ॥ ३० ॥

आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः ॥
सुषुप्तस्वप्नजाग्रद्भिर्मनोवृत्तिभिरीयते ॥ ३१ ॥

परमार्थतस्तु आत्मा ज्ञानमयः ज्ञानस्वरूपः । ज्ञानमित्युपलक्षणम् । सच्चिदानन्दरूपः । सत्यं ज्ञानमनन्तं विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतेः । अज्ञानोपहितमेवात्मरूपं केचिदङ्गीकुर्वन्ति तान्निराह ॥ शुद्ध इति ॥ अविद्योपाध्यसंस्पृष्टः । निरवद्यं निरञ्जनमित्यादिश्रुतेः । अत एवाहङ्कारादिभ्योऽपि व्यतिरिक्तः । अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतेः । अत एवाऽगुणान्वयः गुणसम्बन्धरहितः । साक्षी चेता केवलो निर्गुणश्चेत्यादिमन्त्रवर्णात् । देहादिवैशिष्ट्यप्रतीतिस्त्वौपाधिकीत्याह ॥ सुषुप्तेति ॥ मायाजनितैर्जाग्रत्स्वप्नसुषुप्तिभिरन्तःकरणधर्मैरीयते विश्वतैजसप्राज्ञरूपेण प्रतीयते, न स्वतः । यद्वा सुषुप्त्यादिभिर्मनोवृत्तिभिर्गुणान्वयः प्रतीयते । तथाचान्तःकरणतादात्म्याध्यासात्तदवस्थावत्त्वेन प्रतीयत इति भावः । यद्वा सुषुप्त्यादिभिर्व्यतिरिक्त ईयते । अनन्वागतः स तेन भवतीत्यादिश्रुत्या सर्वावस्थास्वनुगताद् आत्मनोऽवस्थानां व्यतिरेकाभिधानात् । अत एवागुणान्वयः । गुणकार्यावस्थात्रितयसम्बन्धशून्यः । नन्वेवमात्मन एकत्वैकान्ताऽभ्युपगमे नानात्वाभावात् प्रत्यक्षादिप्रमाणानि, विधिप्रतिषेधमोक्षशास्त्रं च व्याहन्येतेति चेन्न । स्वप्नव्यवहारस्य प्राक् प्रबोधादिव सर्वव्यवहाराणां प्राग् ब्रह्मात्मप्रबोधात् सत्यत्वोपपत्तेः । नन्वसत्येन वेदा-

न्तवाक्येन कथं सत्यब्रह्मात्मत्वप्रतीतिरितिचेन्न । शङ्काविषादि-निमित्तमरणादिकार्योपलब्धेः कल्पितादपि ह्रस्वत्वादिधर्मभिन्नो नाग इति पर्वतादिविषयकप्रमोत्पत्तिदर्शनाच्चेति सङ्क्षेपः ॥ ३१ ॥

तथाच मानसः संसारो मनोनिरोधाच्छाम्यतीत्याह ।

येनेन्द्रियार्थान् ध्यायेत मृषा स्वप्नवदुत्थितः ॥
तन्निरुन्ध्यादिन्द्रियाणि विनिद्रः प्रत्यपद्यत ॥ ३२ ॥

येनेति ॥ यथा निद्राया उत्थितः पुमान्मिथ्याभूतमेव स्वप्नं ध्यायति तथा बाधितानपि इन्द्रियार्थान् शब्दादिविषयान् येन मनसा ध्यायेच्चिन्तयेत्, ध्यायँश्च येनेन्द्रियाणि प्रत्यपद्यत प्राप्तवान्, तन्मनः विनिद्रोऽनलसः सन्निरुन्ध्यान्नियच्छेत् । यद्वा मनोनि-रोधान्वयव्यतिरेकाभ्यां संसारभानाभाननिश्चयात् संसारविनि-र्मुक्तात्मस्वरूपावगत्यर्थं मनसो निरोधः सम्पाद्य इत्याह ॥ येने-ति ॥ उत्थितः समाधेः सकाशाद् व्युत्थितो येन मनसेन्द्रियार्थान् ध्यायेत स्वप्नवन्मृषाभूतान्मिथ्याभूतानपि चिन्तयति। समाधिस्थश्च न चिन्तयति तस्मात्तन्मनो निरुन्ध्यादिन्द्रियाणि च निरुन्ध्यात् । तत्रापि विनिद्रः लयशून्यः प्रत्यपद्यतात्मस्वरूपमवाप्नोतीत्यर्थः । यद्वा, एवम्भूतात्मज्ञानमपि नात्मसकाशात् पृथगतस्तदपि निरु-न्ध्यादन्यथा द्वैतापत्तेरित्याशयेनाह ॥ येनेति ॥ उत्थितो देहा-दिभ्यो व्यतिरिक्तात्मज्ञानाभ्यासवान् । येन ज्ञानेनेन्द्रियार्थान् स्वप्नवन्मृषामिथ्याभूतान् ध्यायेत् तज्ज्ञानमिन्द्रियाणि बहिरन्तर्भे-देन द्विविधानि करणानि च निरुन्ध्यात्।ततश्च, विनिद्रः, अज्ञान-तत्कार्यविनिर्मुक्तः प्रत्यपद्यत ब्रह्म सम्पद्यत इत्यर्थः ॥ ३२ ॥

एतत्सिद्धौ कृतकृत्यता भवतीत्याह ।

एतदन्तः समाम्नायो योगः सांख्यं मनीषिणाम् ॥

त्यागस्तपो दमः सत्यं समुद्रान्ता इवापगाः ॥ ३ ३ ॥

एतदन्त इति ॥ इयं ब्रह्मसम्पत्तिः अन्तः समाप्तिः फलं यस्य सः, समाम्नायः कर्मकाण्डरूपो वेदभागो, योग उपासनाकाण्डलक्षणो वेदभागः, सांख्यं ज्ञानकाण्डात्मकस्तद्भागः । यद्वा, समाम्नान्यः काण्डत्रयात्मको वेदः । ननु वेदस्य कर्मादिप्रतिपादनपरत्वदर्शनात् कथमेतदन्तत्वमित्याशङ्क्य फलत्वदर्थावबोधनपरस्य वेदस्यैतदन्तत्वमेव न्याय्यम् । एतदतिरिक्तस्य मुख्यफलत्वाभावादित्याशयेनाह ॥ योग इति ॥ कर्मयोग उपासनायोगश्च सांख्यमात्मानात्मविचारात्मको ज्ञानयोगः । ननु सर्व एवं कुतो न प्रतिपन्ना इत्याशङ्क्याह ॥ मनीषिणाम् ॥ पण्डितानाम् । सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः ॥ एकं साख्यं च योगं च यः पश्यति स पश्यतीत्यादिशास्त्रात् । तत्तत्काण्डोक्तसाधनान्यप्येतदन्तान्येवेत्याह ॥ त्यागः ॥ आहुतित्यागदानादिसंन्यासपर्यन्तः ॥ तपः कृच्छ्रचान्द्रायणादि मनःसँय्यमान्तम् । दम इन्द्रियदमनम् ॥ सत्यं यथार्थभाषणम् । इदमहिंसादेरप्युपलक्षणम् । तत्रानुरूपं दृष्टान्तमाह ॥ समुद्रान्ता इति ॥ यथा आपगाः सर्वा नद्यः साक्षात्परम्परया च समुद्रान्तास्तद्वत् ॥ ३३ ॥

नन्वात्मस्वरूपेण यद्यपि न त्वं वियुक्तस्तथापि सौन्दर्यसौकुमार्य्यसौष्ठवादिगुणगणालङ्कृतविग्रहनन्दनन्दनात्मा दृशां प्रियोऽसह्यविरहः किमर्थं दूरे वर्त्तत इतिचेत्तत्राह ॥

यत्त्वहं भवतीनां वै दूरे वर्त्ते प्रियो दृशाम् ॥
मनसः सन्निकर्षार्थं मदनुध्यानकाम्यया ॥ ३४ ॥

यत्त्वहमिति॥ दृशां प्रियो यदि निकटे वर्तते तदाकदाचिन्मनोऽसन्निकृष्टमपि भवति । दूरे तु तस्मिन्मनः सन्निकृष्टमेव भवति ।

अतो भवतीनां मनःसन्निकर्षार्थं भवतीनां दृशां प्रियोऽहं दूरे वर्ते। वै निश्चयेनैवं ज्ञातव्यम् । यो मदनुध्यानं करोति स एव मम प्रिय इति कृत्वा मदनुध्यानकाम्ययाहं दूरे वर्ते । अनुध्यानेन च परस्परं मनः सन्निकृष्टं भवतीत्यर्थः ॥ ३४ ॥

ननु किमित्येवमुच्यते। अस्माकं तु सन्निकृष्टेऽपि त्वयि मनः सन्निकृष्टमेवासीदितिचेत् सत्यम् । तथाऽप्यस्ति विशेष इत्याह ।

यथा दूरचरे प्रेष्ठे मन आविश्य वर्त्तते ॥
स्त्रीणां च न तथा चेतः सन्निकृष्टेऽक्षगोचरे ॥ ३५ ॥

यथेति ॥ यथा प्रेष्ठे दूरचरे तच्चिन्तया मनसस्तस्मिन्नेव सन्निविष्टत्वं, न तथा सन्निकृष्टे नैश्चिन्त्यादिरर्थः । यद्यपि पुरुषाणामप्येवं, तथापि स्त्रीणां विशेषत इत्थमिति द्योतयितुं स्त्रीणामित्युक्तम् । चकारात् पुरुषाणामपि ॥ ३५ ॥

एतत्फलमाह ।

मय्यावेश्य मनः कृत्स्नं विमुक्ताशेषवृत्ति यत् ॥
अनुस्मरन्त्यो मां नित्यमचिरान्मामुपेष्यथ ॥ ३६ ॥

मयीति ॥ कृत्स्नमित्येतद्विवृणोति ॥ निवृत्ता अशेषास्तत्तद्विषयगोचरा वृत्तयो यस्य तथाभूतं यत् तन्मनो मय्यावेश्य मामेवाऽनुक्षणं स्मरन्त्योऽचिरान्मामवाप्स्यथ ॥ ३६ ॥

नेदं रुच्युत्पादकमात्रमपि तु यथास्थितम् । मदनुस्मरणफलस्य स्वसखीषु भवतीभिर्दृष्टत्वादित्याह ।

या मया क्रीडता रात्र्यां वनेऽस्मिन् व्रज आस्थिताः ॥
अलब्धरासाः कल्याण्यो मापुर्मद्वीर्यचिन्तया ॥ ३७ ॥

या मयेति ॥ स्वभर्त्रादिभिः प्रतिबद्धत्वाद् या व्रजे स्थिता

अस्मिन् वने रात्र्यां क्रीडता मया अलब्धरासा मद्वीर्यचिन्तया मां प्रापुः । यतः कल्याण्यो जन्मान्तरेषु अनुष्ठितसुकृताः । यद्वा मदनुचिन्तया मत्प्राप्तिप्रतिबन्धकदुरितक्षयात् कल्याण्यः । यद्वा, अलब्धरासा अपि मां प्रापुः । भवत्यस्तु लब्धरासाः । अत एव, हे कल्याण्यः । तथाच ब्रह्मलोकावधिभोगमात्रं यदपेक्षया तुच्छं तन्मया सह क्रीडनं प्राप्तवतीनां युष्माकं मत्स्वरूपप्राप्तिरेवावशिष्यते, न त्वन्यत् । सा च यथोक्तोपायेन भविष्यत्येवाऽतोऽसूयादिकं विहायानन्यतया मदनुस्मरणं कार्यमिति भावः । ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमित्यनुरोधेनास्मिन्नित्युक्तम् । अहमपि युष्मत्सन्निधावेव तिष्ठामि । मन्मनसो युष्मासु प्रविष्टत्वात् ॥ ३७ ॥

श्रीशुक उवाच ॥

एवं प्रियतमादिष्टमाकर्ण्य व्रजयोषितः ॥
ता ऊचुरुद्धवं प्रीतास्तत्संदेशागतस्मृतीः ॥ ३८ ॥

एवमुक्तप्रकारेण प्रियतमेनानुपेक्षणीयवचनेनाप्ततमेन तत्राप्यादिष्टमाज्ञापूर्वकमुपादिष्टमाकर्ण्य सम्यगवधार्य प्रीताः, अस्मदुपकाराय भगवानिमं दूतं प्रेषितवानिति विचार्य प्रसन्नचित्ताः । यतः प्रियतमसंदेशैरागता स्मृतिर्वयमनुचर्यो भगवान् स्वामी सर्वदा असूयादिदोषनिवृत्तिपूर्वकमनुसन्धेय इत्यादिलक्षणं स्मरणं यासां ताः । अनुगृहीता यतो व्रजयोषितः । अनुकम्प्यस्थानवासिन्यः सरलचित्ता उद्धवमूचुः ॥ ३८ ॥

यदूचुस्तदाह ।

दिष्ट्याऽहितो हतः कंसो यदूनां सानुगोऽघकृत् ॥
दिष्ट्याप्तैर्लब्धसर्वार्थैः कुशल्यास्तेऽच्युतोऽधुना ॥ ३९॥

दिष्ट्येति ॥ अहितः शत्रुः, प्रेष्ठेन विरहकारणत्वादस्माकमपि यदूनामघकृद् दुःखदः । यद्वा, यदूनामहितो ब्राह्मणादिदुःखकरत्वात् पापकृद् हतः । तत्रापि सानुगः । अनुजसहितः । तद् दिष्ट्या परमानन्दकरम् । यच्च लब्धसर्वार्थैराप्तैर्वसुदेवादिभिः सह अच्युतोऽधुना कुशली आस्ते तदपि दिष्ट्या । यद्यपि प्रियतमसंदेशैर्लब्धस्मृतयस्तथाप्यारूढसख्यभावा विरहव्याकुलचित्ता उक्तवाक्येन स्वदुःखमपि व्यञ्जयन्ति । यदूनां शत्रुर्हतोऽस्माकं तु सर्वेऽपि यदव एव संप्रति शत्रवो जीवन्ति च लब्धसर्वार्थाः संपन्ना, वयं तु नष्टसर्वार्थाः । तेषामिदानीं सन्निहितत्वादच्युतोऽस्माकं तु प्रच्युत इति तेषां भाग्यातिशयोऽस्माकमभाग्यातिशय इति ॥ ३९ ॥

हृदिस्थं स्वभावभूतं मात्सर्यं गूहितुमशक्ताः स्पष्टं समात्सर्यमाहुः

कथं रतिविशेषज्ञः प्रियः स पुरयोषिताम् ॥
नानुबध्येत तद्वाक्यैर्विभ्रमैश्चानुभावितः ॥ ४० ॥

कथमिति ॥ सः अनुभूतपूर्वः रतिविशेषान् जानातीति रतिविशेषज्ञः । अत एव पुरयोषितां प्रियः प्रीतिविषयः । स्वदत्तसुखविशेषाभिज्ञस्य प्रीतिविषयत्वानियमात् । तद्वाक्यैर्व्यङ्ग्यार्थगर्भितैर्विभ्रमैः कटाक्षादिनेत्रादिविचेष्टितैश्चकारान्मनोवृत्तिभिश्च । तथाच वाक्कायमानसव्यापारैरनुभावितोऽनुभवपर्यन्तं नीतोऽनुभवयुक्तो वा कारितः । पूजित इति वा । अनुभाजित इति क्वचित् पाठः । कथं नानुबध्येत प्रेमशृङ्खलाबद्धश्च कथं न भवेत् । अस्माकं तादृशसाधनसामग्रीविधुरत्वादितो गतस्तद्देशात् क्वापि न गमिष्यतीति भावः । पुरेण सहितानां योषितां प्रिय इति वा । तथाच पुरवासिनां तत्पत्न्यादीनामपि तदासक्तत्वान्नास्ति तादृशबन्धनप्रतिबन्धकं किञ्चिदिति भावः ॥ ४० ॥

अस्मासु करणीयां प्रीतिं तासु करोतीत्यनुसंधाय सदुःखमाहुः ।

कच्चिद् गदाग्रजः सौम्य करोति पुरयोषिताम् ॥
प्रीतिं नः स्निग्धसव्रीडहासोदारेक्षणार्चितः ॥ ४१ ॥

कच्चिदिति ॥ स्निग्धं च तत् सव्रीडहासेनोदारमीक्षणं तेनाऽर्चितः । अस्माकं तादृशकटाक्षेणार्चितो रामानुजो यथा नः प्रीतिं करोति स्म तथेदानीं गदाग्रजः पुरयोषितां तेनार्चितस्तासां तथा प्रीतिं करोति कच्चित् । यद्वा, अस्माकं तेनार्चितः प्रीतिं न कृतवान्, अपि तु विहाय गतः । पुरयोषितां तु प्रीतिं करोति कच्चित् । यद्वा, नस्तेनार्चितः प्रीतिं पुरयोषितां करोति कच्चित् । सौम्यस्त्वमतस्त्वामेवं पृच्छाम इति संबोधनाशयः । यद्वा, अस्माकं तादृशकटाक्षेणार्चितोऽस्मास्वाऽऽसक्तचित्तस्तासां प्रीतिं मनोऽनुरञ्जनमात्रं करोति कच्चित् । यद्वा, स्त्रियः कामितकामिन्यो लोकः पूजितपूजक इति न्यायादस्माकं तादृशेक्षणेनार्चितोऽतस्तासामपि तेनार्चितः ॥ ४१ ॥

यद्यप्यधुना भगवान् ब्रह्मोपदेष्टृत्वाद्गुरुर्जातस्तथापि सखित्वभावनाभावितस्वान्तानामस्माकं तथात्वेनैव स्मृतिपथमारोहति, न गुरुत्वेन, नापि परमात्मत्वेनातो भगवानपि सखीत्वेनैवास्मान् स्मरतिचेत्तर्हि नास्त्यस्माकमपराध इति मनसि निधाय पृच्छन्ति ।

अपि स्मरति नः साधो गोविन्दः प्रस्तुते क्वचित् ॥
गोष्ठीमध्ये पुरस्त्रीणां ग्राम्याः स्वैरकथान्तरे ॥ ४२ ॥

अपीति ॥ नोऽस्मान् स्मरति ? । स्मरणसंभावनया प्रश्नः । ननु स्मरणाभावे कथमुपदेशार्थं मां प्रेषितवानित्याशङ्क्य, नोपदेशार्थं स्मरणं वयं पृच्छामः, किन्तु पूर्वानुभूतवृत्तान्तसंबन्धित्वेनेत्याशयेन आहुः ॥ पुरस्त्रीगोष्ठीमध्ये । ननु तत्र भवतीनां स्मरणे का संभावनेति चेत् तत्राहुः ॥ प्रस्तुते क्वचित् ॥

एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायात् कस्मिँश्चिदस्म-त्सदृशप्रसङ्गे प्रस्तुते सति । ननु युष्मत्सम्बन्धिस्मरणे कः प्रसङ्ग इतिचेत्तत्राहुः॥ स्वैरकथान्तरे ॥ अहो व्रज इवात्र स्वैरतया प्रवृत्तिं कर्तुं न शक्नोमीत्येवं कथान्तराले। किञ्च व्यावर्त्यत्वेन तु स्मरण-मावश्यकमित्याशयेनाहुः॥ ग्राम्या इति ॥ स्वास्मिन् स्मरणकर्मत्व-योग्यतामुपपाद्य तस्मिँस्तत्कर्तृत्वयोग्यतामाहुः—
गोविन्द इति ॥ अस्मद्रक्षणेन लब्धगवेन्द्रपदो भगवान् कृतान्य-ऽस्माभिः सार्द्धं विचेष्टितानि स्मर्तुं योग्य इति भावः । साध्नोति परकार्यमिति साधुस्त्वमस्मत्सुखावहमेनदुत्तरं निर्व्याजेन देहीति सं-बोधनाशयः ॥ ४२ ॥

अहो रासक्रीडाधिकरणभूता निशास्त्ववश्यं तेन स्मर्तव्या-स्तत्सम्बन्धेनाऽस्माकमपि स्मरणमावश्यकमित्याशयेन तत्स्मरणं पृच्छन्ति ।

ताः किं निशाः स्मरति यासु तदा प्रियाभि-
र्वृन्दावने कुमुदकुन्दशशाङ्करम्ये ॥
रेमे क्वणच्चरणनूपुररासगोष्ठ्या-
मस्माभिरीडितमनोज्ञकथः कदाचित् ॥ ४३ ॥

ता इति ॥ ताः = मयेमा रंस्यथ क्षपा इति पूर्ववरदत्ताः । स्वदत्तं वस्तु स्मर्यते सर्वैरिति भावः। किञ्च, दुःखाधिकरणभूतः सुखाधिकरणभूतो वा कालोऽवश्यं स्मरणपथमवरोहतीत्याहुः॥ यासु तदाऽस्मन्नायकतादशायां रेमे। तत्रापि प्रियाभिरस्माभिर्यदा तस्य रमणमपेक्षितं स्थितं तदा वयं प्रियाः कारिता इदानीमि-तरप्रियालाभे वयं शिष्या इति व्यङ्ग्यम् । तत्रापि वृन्दावने स्व-च्छन्दलीलास्थाने । नानुभूताऽस्य सा लीला नगरेषु नागरीभिः

संभवतीति भावः ॥ कुमुदैः कुन्दैः शशाङ्केन च रम्ये । अनेनोद्दीपनसामग्रीसम्पदुक्ता । तत्रापि क्वणन्ति चरणनूपुराणि यस्यां रासगोष्ठ्यां तस्यां प्रियाभिरस्माभिरीडिता मनोज्ञा अतिरम्याः कथा यस्य । तथाचैवंविधाऽऽलम्बनोद्दीपनजन्यस्याऽऽवैकुण्ठलोकमप्यलभ्यस्य सुखस्याधिकरणभूता निशाः कदाचित् कस्मिँश्चित् काले स्मरति किम् । यदि स्मरति तर्हि सर्वसाधनसंपन्ना दत्तगुरुदक्षिणा वयं प्रियत्वेनैव तं स्मरिष्यामो, न तु गुरुत्वेन, नापि परमात्मत्वेनेति भावः ॥ ४३ ॥

स्मरति, न वेति तु तिष्ठतु । मुख्यमस्मदभिलषितं यथावद् ब्रूहीत्याशयेनाहुः ।

अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा ॥
सञ्जीवयँस्तु नो गात्रैर्यथेन्द्रो वनमम्बुदैः ॥ ४४ ॥

अप्येष्यतीति ॥ ननु युष्माभिरेव तत्र कुतो न गम्यत इत्याशङ्कानिवृत्त्यर्थमिहास्मिन् वृन्दावने इत्युक्तम् । तत्र स्वाच्छन्द्याद्यभावात्तादृशरसोत्पत्तिर्न संभाव्यत इति भावः । ननु परमस्वतन्त्रोऽसौ कथमायास्यतीति चेत्तत्राहुः ॥ दाशार्ह इति ॥ यथा तेषां दुःखनिरासाय तत्र गतस्तथास्मत्तापनिवृत्त्यर्थमत्राप्यायास्यतीति भावः । जीवनदानात् परं दानं नास्तीति विचार्यायास्यतीत्यस्त्यस्माकं संभावनेत्याशयेनाहुः ॥ तप्ता नः स्वगात्रैर्मुखारविन्दाऽऽदिभिः सञ्जीवयन् । जीवनापगमे तदुपदिष्टार्थाभ्यासः कथं भविष्यति । सकामतया मृतानामस्माकं मुक्तिरपि दुर्लभा । तस्मात् स्वोपदेशसाफल्यायापि तदीयमागमनमुचितमिति भावः । तुशब्देन यथोक्तज्ञानोपदेशैर्नास्माकं जीवनलाभ इति द्योतयन्ति । ननु सकलतापोच्छेदकात्मोपदेशादपि युष्माकं तापनिवृत्तिः कथन्न

भवतीति चेत्तत्राहुः ॥ स्वकृतया शुचेति ॥ नन्दनन्दनाविरहज-
नितेन शोकेन तप्ताः । तथाच स्वविरहजनितशोकस्य तदुपगम एव
निवर्तको, नान्यत्। आत्मज्ञानस्य सांसारिकदुःखनिवर्त्तकत्वादिति
भावः । यद्वोक्तशोकेन तप्तात्मत्वात्तेन द्रवमाणानां शूद्रत्वाद्वा ता-
पनिवृत्तिं विनात्मोपदेशाधिकाराभावात् स्वयमेवात्रागत्य तापं नि-
वर्तयतु आत्मज्ञानं चोपदिशतु भगवानिति भावः। तत्रानुरूपं दृष्टा-
न्तमाहुः ॥यथेति॥ गृहादिदाहस्तु जलान्तरैरपि शाम्यति। वनदाह-
स्त्विन्द्रनियुक्तपयोदैरेवोपशाम्यति । तद्वदस्माकं तापः प्रेष्ठप्रदर्शि-
तस्य मुखारविन्दादिनैवोपशान्तिं गमिष्यति,नान्यथेत्यर्थः ॥४४॥

तदागमनसंभावनयैतदुक्त्वा पुनर्विचार्य्यानागमनहेतूननुसंधाय
तदागमनं न सम्भवतीत्याहुः ।

> कस्मात् कृष्ण इहायाति प्राप्तराज्यो हताहितः ॥
> नरेन्द्रकन्या उद्वाह्य प्रीतः सर्वसुहृद्वृतः ॥ ४५ ॥

कस्मादिति ॥ वर्तमानकाले अत्रागमनहेतुं न पश्यामः । यतः
प्राप्तराज्यः । पूर्वं ह्यापद्ग्रस्तत्वादिहागतः स्थित, इदानीं लब्ध-
राज्य इह गोपालनादिनिकृष्टाधिकारस्थाने कस्मादायाति । किञ्च
हताहितः । यद्भयात् पलाय्यात्रागतः स चाहितः शत्रुः कंसो हतो
येन सः । तथाच तादृशः शत्रुरपीदानीं तत्र नास्ति, यद्भयाद-
त्रायाति । अत्राऽपि स नास्ति यद्धननार्थं वाऽत्रायातीति भावः ।
नन्नु अत्र लब्धमुपकारं स्मृत्वा प्रत्युपकारार्थं सद्य एवायातीति
शङ्कानिरासाय कृष्ण इत्युक्तम् । श्यामवर्णात् सकपटात् तस्मा-
न्नास्ति प्रत्युपकारप्राप्तिसम्भावनेत्याशयः । नन्विदानीं नव्यानां
प्रियाणां नगरस्त्रीणामनुरञ्जने लब्धनवीनराज्यस्थित्युपकरणसंपा-
दनादौ च व्यापृतत्वान्नायाति, पश्चादवकाशदशायामायास्यतीति

चेत्तर्ह्येवंविधप्रतिबन्धकानामुत्तरोत्तरं बहूनां संभावितत्वात् कदापि तस्यावकाशो दुर्लभ इत्याशयेनाहुः॥ नरेन्द्रेति॥ तथाच दिग्विजयस्तत्र नरेन्द्रपराजयसंपादनोद्योगस्तत्कन्याहरणतद्विवाह–तत्प्रीत्युत्पादनपुत्रोत्पादनोद्योगः। ततः पुत्रपौत्रादिसुहृद्वृन्दतत्त्वं, तत्रैव प्रीतत्वं, तदनुरोधपरायणत्वं चेति सर्वदा निरवकाशः कस्मादायास्यतीति भावः॥ ४५॥

ननु श्रीपतेस्तस्य किं राज्येन किं वा नरेन्द्रकन्याभिरितिचेत् तर्हि सर्वापेक्षया निकृष्टाभिरस्माभिरपि किं यदर्थमायास्यतीत्याशयेनाहुः।

किमस्माभिर्वनौकोभिरन्याभिर्वा महात्मनः॥
श्रीपतेराप्तकामस्य क्रियेतार्थः कृतात्मनः॥ ४६॥

किमिति॥ धर्मार्थकाममोक्षाख्यपुरुषार्थेषु च कामनावद्भिरेव सर्वैः सर्वः समाश्रीयते। न चाऽसौ धर्माभिलाषुरित्याहुः॥ कृतात्मनः॥ कृतकृत्यस्य। नाप्यर्थाभिलाषुरित्याहुः॥ श्रीपतेरिति॥ सर्वार्थमूलभूतायाः श्रियः पतिस्तस्य। नापि कामाभिलाषुरित्याहुः॥ आप्तकामस्य॥ नापि मोक्षार्थीत्याहुः॥ महात्मनः परब्रह्मणो मोक्षस्वरूपस्य मुमुक्षुत्वायोगात्। एवम्भूतस्य तस्याऽस्माभिर्वनौकोभिर्वनचरीभिः पशुतुल्याभिरन्याभिः सर्वोत्कृष्टाभिर्नरेन्द्रकन्योर्वश्यादिभिर्वा कः अर्थः क्रियेत। किं वा प्रयोजनं संपादनीयम्। न किमपीत्यर्थः। इदं राज्यादेरप्युपलक्षणम्। यद्वा महात्मनः, परमात्मनः, अत एव श्रीपतेरत एवाप्तकामस्यात एव कृतात्मनः पूर्णस्य॥ ४६॥

परं सौख्यं हि नैराश्यं स्वैरिण्यप्याह पिङ्गला॥
तज्जानतीनां नः कृष्णे तथाप्याशा दुरत्यया॥४७॥

तथाचैवं विधनिरपेक्षाऽपेक्षावतीनामस्माकं नास्ति तापनिवृत्तिकरः कश्चिदुपायः । यद्यप्यस्ति नैराश्यरूप एकस्तथापि नाऽसावस्माभिरनुष्ठातुं शक्य इत्याशयेनाहुः ॥ परमिति ॥ आशायाः सर्वदुःखनिदानत्वात् तन्निवृत्तिः परं सौख्यम् । हिशब्दः, प्रजापते आशया श्राम्यसि, औपस्थ्यजैह्व्यकार्पण्याद् गृहपालायते नरः * यतो यतो निवर्तेत विमुच्येत ततस्ततः * निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपीत्यादिश्रुतिस्मृतिप्रसिद्धिं द्योतयति । अतिपामरप्रसिद्धोऽप्ययमर्थ इत्याशयेनाहुः ॥ स्वैरिण्यपीति ॥ तथा तज्जानतीनामप्यस्माकं कृष्णे या आशा सा आशा दुरत्यया त्यक्तुमशक्या । पिङ्गला हि वेश्या कृष्णाशयान्याशां त्यक्तवती । सदानन्दरूपस्य परमात्मनः सर्वोत्तमत्वाद् वयं किमाशया कृष्णाऽऽशां त्यक्ष्याम इति भावः ॥ ४७ ॥

नन्वत्यन्तालभ्यविषये किमित्याशया सन्तप्तचित्ताः संपन्ना इत्याशङ्क्य, यथाऽसावत्यन्तालभ्यस्तथा तद्विषयिका आशाप्यत्यर्थं दुरत्यया । केनाप्यत्यक्तत्वादतो न वयमेवोपालम्भनीया इत्याशयेनाहुः ॥

क उत्सहेत संत्यक्तुमुत्तमश्लोकसंविदम् ॥
अनिच्छतोऽपि यस्य श्रीरङ्गान्न च्यवते क्वचित् ॥४८॥

क इति ॥ उत्तमश्लोकस्य संविदम् एकान्तवार्ताज्ञानं वा सम्बन्धं वा, एकान्तवार्तादिविषयिकामाशां कः संत्यक्तुमुत्साहमपि कुर्यात् । त्यागस्य तु का वार्ता । यतोऽसावुत्तमैरपि श्लोक्यते श्लाघ्यते । अन्येषां का वार्ता ब्रह्मादिभिः प्रार्थनीयकरुणाकटाक्षा सर्वोत्तमा श्रीश्चलाऽपि अनिच्छतोऽपि यस्य भगवतोऽङ्गाद्वक्षःस्थलात्, क्वचिन्न च्यवते कदाचित् कुत्रचिदपि प्रच्युता न भवति

तस्याशां वयं वराक्यः कथं त्यक्तुं शक्ष्याम इत्यर्थः ॥ ४८ ॥

एतद् दुःखस्य भैषज्यं यदेतन्नाऽनुचिन्तयेत् * एतद्विज्ञान-सामर्थ्यं न बालैः समतामियादित्यादिनाऽननुस्मरणं यद्यपि दुःखौषधमुक्तं, तथाप्यस्माकं तदतीव दुर्लभम् । स्मारकाणां प्रब-लानां बहूनां विद्यमानत्वादित्याहुः ।

सरिच्छैलवनोद्देशा गावो वेणुरवा इमे ॥
सङ्कर्षणसहायेन कृष्णेनाचरिताः प्रभो ॥ ४९ ॥

सरिदिति ॥ सरित् सर्वत्यागेऽपि जलानयनार्थमवश्यं गन्त-व्या नदी यमुना । बहिर्गताभिरनिवारितदर्शन उच्चैः स्थितः शैलो गोवर्द्धनः । विहाराऽर्थमवश्यं गन्तव्या वनोद्देशा वृन्दावनस्य तत्तत्प्रदेशाः । गृहादाववश्यं द्रष्टव्या गावः । निमीलितनेत्राभि-रवारितश्रवणा वेणुरवाः संकर्षणसहायेन कृष्णेन सदानन्दस्व-रूपेण स्मृतिसन्ततिसंपादनार्थं सङ्कर्षणेन सह कृतावतारेणाच-रितास्तदाचरणसम्बद्धा इमे सरिदादयः, अवश्यमनुभूयमानाः पुनः पुनः स्मारयन्तीति परेणान्वयः। यद्वा चौर्यदैत्यमारणाऽस्मत्पा-लनलालनस्वच्छन्दरमणादिरूपाणि भगवच्चरितानि निरुद्धश्रोत्रा-दिवृत्तीनामपि स्मारयन्ति । प्रभुणा प्रेषितस्त्वमप्यस्माकं प्रभुरतो-ऽस्मद्दुःखमाकर्ण्य निवारयेति संबोधनाशयः । तद्विस्मरणे त्वं प्रभुः स्याः, न तु वयमिति वा ॥ ४९ ॥

पुनः पुनः स्मारयन्ति नन्दगोपसुतं बत ॥
श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ॥ ५० ॥

कदाचिन्मूर्च्छादौ क्षणमात्रं विस्मरणे, पुनः पुनः स्मारय-न्ति इति ॥ स्मारकाणां प्राबल्यमुक्तम् । तत्रापि नन्दगोपसुत-म् ॥ महत्यां पीडायां प्रबलाश्रयणं कार्यमिति विचारे नन्दराय-

श्चेत् स्मृतिपथमारोहति तदा तत्सुतत्वेन श्रीकृष्णोऽपीति भावः । यद्वा, ननु दूरस्थितं वस्तु विस्मर्यते, भगवाँस्तु न दूरस्थितः, किन्तु सर्वेषामात्मत्वादत्यन्तनिकटवर्त्ती । अत एव, भवतीनां वियोगो मे न हि सर्वात्मना क्वचिदिति भगवताऽऽदिष्टमित्याशङ्कानिरासायोक्तं- नन्देति ॥ किञ्च, श्रियः सर्वलावण्यकारणभूताया निकेतैर्वासस्थानैस्तस्य पदकैः कोमलैश्चरणारविन्दैर्हृदि कृतदृढस्थानैः स्मरणपुष्कलकारणैः कृत्वा विस्मर्तुं नैव शक्नुमः । बतेति खेदे । अहो कष्टं, न प्राप्तुं शक्यते, नापि विस्मर्तुम् । किं कुर्मः, क्व गच्छाम इत्यर्थः ॥ ५० ॥

किञ्च, बुद्ध्या विस्मरणसाधनं मनोनिरोधः संपाद्यत इत्यविवादम् । अस्माकं सा भगवता पूर्वमेव हृताऽतोऽस्माभिस्तद्विस्मरणे क उपाय आश्रयणीय इत्याशयेनाहुः ॥

गत्या ललितयोदारहासलीलावलोकनैः ॥
माध्व्या गिरा हृताधियः कथं तद्विस्मरामहे ॥ ५१ ॥

गत्येति ॥ महत्या सेनया हृताऽस्माकं बुद्धिः पुनः समानेतुमशक्येति ज्ञापनार्थं, गत्येत्यादि ॥ गतौ ललितत्वम्, अवलोकनेषु लीलापूर्वकत्वं, गिरि मधुरत्वमित्युक्त्या यथोक्तविशेषणविशिष्टगत्यादीनां कुत्राप्यनुपलम्भात् तद्गत्यादीनां प्राबल्यं बोधितम् । तथाच भगवान् अहृतबुद्धित्वादस्मान् विस्मरतु नाम, वयं तु हृतधियस्तदीयं गत्यादिकं कथं विस्मरामहे । तन्न संभवतीत्यर्थः । त्वं तदुपायं जानासि चेत्तर्हि वदेति प्रश्नो वा ।
यद्वा, अनुस्मरन्त्यो मां नित्यमचिरान्मामुपेष्यथेति- भगवत्संदेशोत्तरत्वेन विस्मरणाशक्तिप्रतिपादनपरो ग्रन्थो योजनीयः । तथाचैवंविधस्मरणवतीनामस्माकं प्रवृत्तप्रवर्तनरूपोऽयमुपदेशस्तादृक्स्मर-

णे सत्यप्यन्यत्रापि तस्यालाभादयथार्थश्चेति भावः ॥ ५१ ॥

एवं वर्णयन्त्यः स्वदुःखनिवृत्तावुपायमपश्यन्त्यः साक्रोशं तमेव प्रार्थयन्ति ।

हे नाथ हे रमानाथ व्रजनाथाऽऽर्तिनाशन ॥
मग्नमुद्धर गोविन्द गोकुलं वृजिनार्णवात् ॥ ५२ ॥

हे नाथेति ॥ गोकुलवासिगोपिकाजनं त्वद्विरहजनितदुःखसागरे निमग्नं स्वोद्धाराशक्तं त्वमेव दुःखसमुद्रादुद्धर । अन्यतृणपर्णादयोऽपि त्वद्विरहजनितवृजिनार्णवे निमग्ना इति ज्ञापयितुं गोकुलमित्युक्तम् । यतस्त्वमेव सर्वस्य नाथः स्वामी । यथा गजेन्द्रमन्दराऽचलादयस्त्वयोद्धृतास्तथा स्वाम्यत्वाविशेषाद् गोकुलमप्युद्धरेत्याशयेनाहुः ॥ हे नाथेति ॥ ननु ताँस्तान्भोगमोक्षप्रदानेन यथोद्धरामि तथोद्धारश्चेत्प्रार्थ्यस्तर्हि झटित्येव कर्तुं शक्य इतिचेत्तत्राहुः ॥ हे रमानाथेति ॥ तथाच भोगमोक्षादिनिरपेक्षा त्वदेकरमणस्वभावा रमा यथा सर्वदा स्वसङ्गप्रदानेनाऽनुगृह्यते तथाऽनुग्रहाकाङ्क्षावत्यो वयमिति भावः । ननु रमानाथत्वेन विशेषतः प्रसिद्धत्वात् तन्मनोरथं पूरयामीतिचेत्तत्राहुः ॥ हे व्रजनाथेति ॥ तथाच विशेषतो व्रजनाथत्वेनापि प्रसिद्धस्त्वं तद्दुःखं किमिति नाऽपाकरोषीति भावः । किञ्च स्वीयानां सर्वेषां दुःखापहारकत्वाद्धरिः सर्वार्तिनाशनस्त्वं स्वस्वरूपरक्षणार्थमस्मदार्तिं नाशयेत्याशयेन संबोधयन्ति ॥ हे आर्तिनाशनेति ॥ किञ्च, गोकुलरक्षणेन गोविन्दाख्यां प्राप्तवतस्तव तदरक्षणं नोचितमित्याशयेनाहुः ॥ हे गोविन्देति ॥ यद्वा, महेन्द्रभयाद् रक्षितं गोकुलं स्वभये किमर्थं निमज्जयसीति संबोधनाशयः । यद्वा पूर्वं मत्स्यरूपेण गोकुलं श्रुतिसमुदायं यथोद्धृतवाँस्तेन च गोविन्दनाम लब्धवान्, तद्वदुद्धर्त-

मानगोकुलोद्धारोऽप्युचित इति । अतः सर्वथाप्यस्य दुःखनिवर्त-
कत्वमेव तवोचितमित्यर्थः ॥ ५२ ॥

एवं प्रियविरहानलज्वालामालाव्याप्तमानसानां तासां तदुत्तरं
कीदृश्यवस्था संवृत्तेत्यपेक्षायां, श्रीशुक उवाच ॥

श्रीशुक उवाच ॥

ततस्ताः प्रियसंदेशैर्व्यपेतविरहज्वराः ॥
उद्धवं पूजयाञ्चक्रुर्ज्ञात्वाऽऽत्मानमधोऽक्षजम् ॥ ५३ ॥

ततः स्वदुःखनिवेदनानन्तरमुद्धवेन त एव प्रियसंदेशाः
पुनः श्राविताः । तैः प्रियस्य संदेशैः, भवतीनां वियोगो मे न
हि सर्वात्मना क्वचिदित्यादिकैः प्रियेण परमाप्तेन प्रेषितत्वाद्
यथार्थत्वप्रतीतिजनकैस्ताः प्रियमधोक्षजं सर्वेन्द्रियजन्यज्ञानाविषयं
नित्यं ज्ञात्वा, तं च स्वात्मानं ज्ञात्वा व्यपेतो विशेषेण निवृत्तो वि-
रहज्वरो यासां ता उद्धवं भगवदुपदेशप्रापकत्वाद् गुरुप्रतिनिधिं
मत्वा पूजयाञ्चक्रुः संमाननं कृतवत्यः । तथाच तत्त्वज्ञानमवाप्य
जीवन्मुक्तिदशां प्राप्ताः सफलजन्मवत्यः सम्पन्ना इति भावः ॥५३॥

ताभिः समर्चित उद्धवस्ततः किं कृतवानित्यपेक्षायामाह ।

उवास कतिचिन्मासान् गोपीनां विनुदञ्छुचः ॥
कृष्णलीलाकथा गायन् रमयामास गोकुलम् ॥ ५४ ॥

उवासेति ॥ गोपीनां पूर्ववासनया गोपालस्वरूपप्रियविरहा-
ऽनुसन्धानवतीनां पुनः पुनरुत्थितान् शोकान् विनुदन् भगवत्स्वरू-
पोपदेशावृत्त्या सम्यगपनयन् कतिचिन्मासानुवास । अभ्यास-
वशात् कृष्णलीलाकथास्वेव । तत्रत्यानां रमणमालोक्य ता एव
गायन् गोकुलं रमयामास । कृष्णस्य परब्रह्मणो या गोवर्द्धनो-

द्धरणादिरूपा लीलास्तासां कथानां गानं मुमुक्षूणां मुक्तानां च रमणस्थानमतः शोकापनोदकाऽऽत्मज्ञानोपदेशावसरे तद्गानमपि परमानुकूलमेवेत्याशयेनोद्धवस्य तथा प्रवृत्तिरित्यर्थः ॥ ५४ ॥

एषा प्रवृत्तिश्च सफलाऽभूदित्याह ।

यावन्त्यहानि नन्दस्य व्रजेऽवात्सीत् स उद्धवः ॥
व्रजौकसां क्षणप्रायाण्यासन् कृष्णस्य वार्तया ॥५५॥

यावन्त्यहानीति ॥ स उद्धवो यावन्ति दिनानि नन्दस्य व्रजे नन्दनन्दनासक्तमानसवासस्थाने अवात्सीद् वासं कृतवान्, तावन्ति व्रजवासिनां कृष्णस्य परब्रह्मणो वार्तया तत्त्वोपदेशरूपया गृहीत-नन्दनन्दनावतारस्य च वार्तया लीलाकथया हेतुभूतया क्षणप्रा-याण्यासन् । क्षणादपि न्यूनत्वबोधनाय प्रायपदम् । बहिर्मुखैर्हि दिनानि गण्यन्ते,न तु कृष्णाभिन्नात्मभिर्नाऽपि तल्लीलाकथाश्रव-णाद्यासक्तचेतोभिरिति भावः ॥ ५५ ॥

ननु भगवन्तं परित्यज्य किमिति तदर्थं बहून्मासाँस्तत्र स उवासेत्याशङ्क्य भगवद्दासस्य तस्य तल्लीलास्थानानि सर्वाणि स्वयं गत्वा साक्षाद् द्रष्टव्यानीति चिरकालादारभ्य मनोरथ आ-सीत् । ततश्च सर्वाभिप्रायविदा भगवता प्रेषितस्तदाज्ञापालनस्व-परप्रयोजनसिद्ध्यर्थं तत्र बहुकालमुवासेत्याशयेनाह ।

सरिद्वनगिरिद्रोणीर्वीक्षयन् कुसुमितान् द्रुमान् ॥
कृष्णं संस्मारयन् रेमे हरिदासो व्रजौकसाम् ॥५६॥

सरिदिति ॥ यमुनावृन्दावनगोवर्द्धनतद्दरीः भगवदनुभावेना-ऽपर्तावपि कुसिमितान् पुष्पयुक्तान् चम्पकादिवृक्षान् साक्षात् पश्यन् । अत्र श्रीकृष्ण इमां लीलां कृतवाँस्तत्रेमामिति व्रज-

वासिभिः प्रदर्शितानि तत्तत्स्थानानि साक्षात्कुर्वन् व्रजौकसां च तत्तत्प्रश्नद्वारा कृष्णसंदेशप्रदानेन च कृष्णं परमेष्टं परमात्मानं सस्मारयन् रेमे । तथाच भगवदाज्ञापालनतत्रत्येष्टसम्पादनाऽविरोधेन स्वार्थं सम्पादयामास ॥ हरिदास इत्यनेन तत्र मलिमभावेन तस्य वासो निवारितः । सामान्येन सर्वदुःखहारिभगवद्दासत्वाच्च सामान्येन सर्वेषां तत्रत्यानां दुःखं निवारयामासेति द्योतनाय, व्रजौकसामित्युक्तम् ॥ ५६ ॥

क्षणमात्रं कृष्णमात्मत्वेन ज्ञात्वा व्यपेतविरहज्वरत्वेनावस्थानं क्षणमात्रं तं प्रेष्ठं मत्वा तद्विरहतापव्याकुलत्वेनैसेतद्द्वयमेकत्र दृष्ट्वाऽतिविस्मितस्वान्त उद्धवोऽतिप्रीतो जात इत्याह ।

दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मवैक्लवम् ॥
उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥५७ ॥

दृष्ट्वेति ॥ गोपीनां स्वीकृतगोपवेशप्रियाणां कृष्णस्य चित्ताकर्षकस्य श्यामसुन्दरस्य प्रेष्ठस्यावेशेन, हा क्व गत इति तत्सम्बन्धिविरहजनितदुःखावेशेनात्मनो मनआदेर्विक्लवं वैक्लव्यं गोपस्य सर्वेन्द्रियपालकतया स्वान्तर्निविष्टस्यांशभूतत्वेन तदात्मनां कृष्णस्य सच्चिदानन्दरूपस्य परमात्मन आवेशेन सम्यगभेदसम्पत्त्या आत्मनो देहादेर्वैक्लव्यमहम्भावत्यागाच्छैथिल्यमुक्तप्रकारकादिरूपं दृष्ट्वा उद्धवः परमप्रीतः, अहो एतासामुत्कर्षातिशयः समाहितचेतसां ब्रह्मस्वरूपेणावस्थानं, व्युत्थितमनसां तदीयविरहव्याकुलत्वेन, न त्वेतासां देहाद्यनुसन्धानम् । लोकव्यहारानुसन्धानं तु दूरापास्तमित्यनुसन्धाय परमप्रसन्नो जातः । एवमेव च भगवद्भक्तैरवस्थेयम् । न त्वेतद्द्वयं मय्यस्त्यत एता मत्तोऽभ्यधिका इति मनसि निश्चित्य ता नमस्यन्, उत्तमस्य तत्र गोपाङ्गनानमस्कृति-

त्युक्तेति लोकाऽऽशङ्कानिरासाय इदं वक्ष्यमाणं तासां महत्त्वं जगौ ॥ ५७ ॥

तदुदाहरति ।

एताः परं तनुभृतो भुवि गोपवध्वो
गोविन्द एवमखिलात्मनि रूढभावाः ॥
वाञ्छन्ति यद्भवभियो मुनयो वयं च
किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥ ५८ ॥

एता इति ॥ परं केवलम् एता एव तनुभृतः सफलजन्मानो, न तु तनूरूपा इति वा (१) यतः, अखिलात्मनि गोविन्दरूपेण प्रेष्ठत्वमापन्ने रूढभावाः । रूढः पराकाष्ठां गतो भावः प्रेमा यासाम् । गोविन्दे स्वप्रेष्ठे भगवत्सन्देशैरखिलात्मत्वेनावगते, एवं रूढभावाः । वासुदेव एवाखिलात्मा, नातोऽन्यत्र किञ्चिदस्तीति दृढनिश्चयवत्यः । तथाच नैवंविधा लौकिकाः । देहतादात्म्याध्यासवत्त्वादस्वाधीनसङ्गातत्वाच्च । ननु सन्ति लक्ष्मीप्रमुखा एवंविधा इतिचेत्तत्राह ॥ गोपवध्वः ॥ लक्ष्म्याद्यास्तु नारायणवध्वस्तेन कदापि न वियुक्ता, अतस्तस्मिन् यद्यपि प्रेमवत्यस्तथापि नैवंविधरूढभावा इति भावः । यद्वा ता उत्कृष्टा, एतास्तु गोपवध्वो निकृष्टजात्युत्पन्नास्तत्रापि भुवि, तास्तु वैकुण्ठादौ स्थिताः । भूमौ लब्धस्य जन्मन एवम्भूतरूढभावसम्पादनेनैव साफल्यम् । तच्च तद्व्यतिरिक्तस्य सर्वस्यापि दुर्लभमित्यपि, भुवि गोपवध्व इति

---

(१) देहाध्यासवन्तः किल स्थूलत्वादिविशिष्टमात्मानं मन्यमानास्तनुरूपाः । एतास्तु निरस्तसमस्ताध्यासा न तथेति तनुभृत इत्युक्तमिति भावः ।

पदाभ्यां ध्वनितम् । इदमेव स्पष्टयति ॥ वाञ्छन्तीति ॥ यत्र यं रूढभावं भवभियो भवाज्जन्ममरणलक्षणसंसृतिचक्राद् भीर्भयं येषां ते मुमुक्षवो वाञ्छन्ति । मुनयस्तत्त्वविदो जीवन्मुक्ता वयं भगवद्भक्ताश्च । मुमुक्षूणां तूभयविधोऽपि भावोऽप्राप्तत्वाद्वाञ्छाविषयः । तत्त्वविदां तु सर्वात्मनिरूढभावत्त्वेऽपि तादृशरूढप्रेमाभावाद्वाञ्छा । भक्तानां केषाञ्चिदेतत्सत्त्वेऽपि सर्वात्मनिष्ठत्वाभावात्तद्वाञ्छा । यद्यपि नारदप्रह्लादादीनामुभयविधभावो वर्त्तते तथापि स्वदेहाधिकारानुरूपलौकिकव्यापारपरताऽपि दृश्यतेऽतोनैवंविधरूढभाववत्त्वमिति भावः । ननु केचिद् ब्रह्मर्षयोऽन्तर्मुखतादशायां ब्रह्मनिष्ठा, बहिर्मुखतादशायां दीर्घसत्राद्यनुष्ठातृत्वेन परमात्माराधनपरायणाश्च दृश्यन्ते । ते चोत्कृष्टजन्मवत्त्वादेताभ्यः श्रेष्ठाः स्युरित्याशङ्क्य तेषामपि तत्तत्कर्मानुष्ठानरूपस्य व्यवधानस्य सत्त्वान्नैवमित्याशयेनाह ॥ किमिति ॥ अनन्तस्य कथासु रसो यस्य तस्य ब्रह्मजन्मभिः तत्संबन्धिभिः शौक्लसावित्रयाज्ञिकैस्त्रिभिर्जन्मभिः किम् । न कोऽप्यतिशयः । यथोक्तभाववान् यत्रकुत्रापि जातः सर्वस्मात्सान्तकथारसादुत्तमः । यद्यनन्तकथारसस्य यस्य कस्याऽप्येवं तर्हि किं वक्तव्यं भगवत्प्रियाणां तासामित्याशयः । ननु यद्यप्येवं, तथापि जातितस्ता निकृष्टा इत्याशङ्क्याह ॥ किमिति ॥ जातेरुत्कृष्टताया अपकृष्टताया वाऽप्रयोजकत्वादिति भावः । यद्वा, एताभिर्लब्धं पदं सर्वे, वाञ्छन्ति, एतासां तु चतुर्मुखजन्मसहस्रमपि नाभिलाषास्पदमित्याशयेनाह ॥ किमिति ॥ तथाच ब्रह्मादिवन्द्यपादपद्मानामग्रे, के वयं वराका इति भावः ॥५८॥

अथात्यन्तायोग्यत्वात् कथमेवंविधं ब्रह्मादिभिरपि प्रार्थनीयं भावं प्राप्ता इत्यालोच्य विस्मितचित्त आह ।

क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः

कृष्णे क्व चैव परमात्मनि रूढभावः ॥
नन्वीश्वरोऽनुभजतोऽविदुषोऽपि साक्षा-
च्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥ ५९ ॥

केति ॥ द्वौ क्वशब्दौ महदन्तरं बोधयतः । तदुपपादकानि विशेषणानि, इमा इत्यादीनि ॥ तत्रेमा गोप्यो हीनजात्युत्पन्ना-स्तत्रापि स्त्रियो योनितो निकृष्टास्तत्रापि वनचर्य्यो निकृष्टतापाद-कवनवासवत्यः । ननु, वने तु सात्त्विको वास इत्युक्तत्वात् कथं वनवासस्य निकृष्टतापादकत्वमुक्तमिति शङ्कानिरासाय, चरीत्यु-क्तम् । तथाचोत्कृष्टजात्युत्पन्नानां शास्त्रोक्ततपआद्यनुष्ठानपराणां वने वासः सात्त्विको, न तु यथोक्तानां स्वच्छन्दचरीणां वानरादि-समानाम् । अनेन लौकिकचातुर्यशास्त्रीयानुष्ठानतदाराधनोप-करणाद्यभावः सूचितः । अन्तःकरणतोऽपि हीना इत्याह ॥ व्य-भिचारबुद्ध्या दुष्टाः । लोके व्यभिचारेण दुष्टत्वेन प्रसिद्धा इति वा । कृष्णे सदानन्दरूपे परमात्मनि रूढभावः केति महदाश्चर्य-म् । तथाच जात्याचारज्ञानादिहीनानां सर्वोत्कृष्टपदप्राप्तिदर्शनाद्‍ भगवद्भजनलब्धतत्प्रसाद एव परममहत्त्वे हेतुर्न तु जात्यादिकमिति निश्चीयत इत्याशयेनाह ॥ नन्वीश्वर इति ॥ भजनधारावतः, अ-विदुषोऽपि भगवत्स्वरूपानभिज्ञस्यापि साक्षाच्छ्रेयस्तनोति, न तु पर-म्परया । तत्रानुरूपं दृष्टान्तमाह ॥ अगदराजः अमृतम् । उपयुक्तः, स्वरूपेणाज्ञातोऽपि यथा तद्वत् । यद्वा, ननु जारबुद्ध्या भगवति भ-क्तानां स्त्रीणामासां कुतस्त्यमेवंविधं माहात्म्यमित्याशङ्क्याह ॥ केति ॥ इमा भगवत्प्रियाः क्व, अन्या लौकिकस्त्रियश्च क्व । अत-स्तत्साजात्यमात्रेण नैतास्वपकृष्टताबुद्धिर्विधेयेति भावः । यतः सामान्यस्त्रियः प्रायेण व्यभिचारदुष्टा भवन्ति । एतास्तु अवन-

चरीः अत्र वने भगवता क्रियमाणे सर्वतो रक्षणे चरन्तीति तथा। एतेनासां भगवत्सम्बन्ध एव, न तु गोपसम्बन्धः । मन्यमानाः स्वपार्श्वस्थानित्युक्तत्वाद् गोपानां तत्सम्बन्धस्य प्रातीतिकत्वात् । तथा पुत्रादिसम्बन्धोऽपि तासां लोकप्रतीत्येति भावः । एवं लौकिकस्त्रीभ्यो वैलक्षण्यमुक्त्वा ब्रह्मादिभ्य उत्कृष्टत्वमुक्तमुपपादयति ॥ कृष्ण इति ॥ एष लोकवेदाऽप्रसिद्धो गोपाङ्गनाभिस्त्वनुभूयमानः क्व । ब्रह्मादौ लक्ष्म्यादौ च दुर्लभस्तत्रापि कृष्णे तदर्थमेव प्रकटीकृतकोटिकन्दर्पाधिकलावण्यादिगुणवत्कृष्णविग्रहे, तत्रापि परमात्मनि । सर्वस्यात्मार्थं सर्वं प्रियं भवति । एतासां तु तदर्थमेव सर्वः प्रिय इति विशेषः । यद्वा बहिर्मुखतादशायां यथोक्तस्वरूपे कृष्णे अन्तर्मुखतादशायां परमात्मनि, तत्रापि रूढः परां काष्ठां प्राप्तः । तथाचैवंविधे विषय एवंविधस्य भावस्य कुत्राप्यसम्भवात् सिद्धं सर्वोत्तमत्वमासामिति भावः । ननु स्वरूपमविज्ञायानुरक्तानामासां स्वस्मिन्नेवंविधो भावः किमिति भगवता ताभ्यो दत्त इत्याशङ्क्याह ॥ नन्विति ॥ ननु निश्चयेन यतोऽसावीश्वरः कर्तुमकर्तुमन्यथाकर्त्तुं वा समर्थोऽतोऽनुभजतोऽविदुषोऽपि साक्षाच्छ्रेयस्तनोतीत्यर्थः । यद्वा, स्त्रियस्तत्रापि निकृष्टजात्युत्पन्नास्तत्रापि वनचर्यः प्रायेण व्यभिचारदुष्टा दृष्टाः, इमा अपि तद्धर्मवत्त्वात् तथात्वयोग्या अपि क्व, क्व चैवं परमात्मनि कृष्णे रूढभाव इत्यहो परमाश्चर्यमित्यादि पूर्ववत् ॥ केचित्तु भगवता स्वार्थमुत्पादिता मध्ये कालविलम्बे अन्या गोपालान् भ्रमात् पतिबुद्ध्या गृहीत्वा व्यभिचारं कृतवत्यस्तेन दुष्टा इत्याहुः ॥ अन्ये तु भगवत्सम्बन्धानन्तरं पुनर्गोपसम्बन्धरूपेण व्यभिचारेण दुष्टा इति वदन्ति ॥ ५९ ॥

यथैव विरूढभावः कुत्रापि नास्ति तथा भगवता यः प्रसाद

एतासु कृतः स तु कुत्रापि न कृत इत्याह ।

नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः
स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ॥
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ
लब्धाशिषां य उदगाद् व्रजवल्लवीनाम् ॥ ६० ॥

नायमिति ॥ अङ्गे स्ववक्षसि नितान्तरतेः एकान्तरतिमत्याः श्रियोऽपि नाऽयं प्रसादोऽनुग्रहः । उ अहो अत्याश्चर्यम् । स्ववक्षसि स्थापयित्वा निरन्तरं रतिं प्रयच्छन्नपि नेमं प्रसादं दत्तवान् । तथा स्वर्योषितां स्वर्गाङ्गनानां, नलिनस्य कमलस्येव गन्धो रुक्कान्तिश्च यासां तासामपि अयं प्रसादो न दत्तः । इन्द्रोपेन्द्रादिरूपापन्नोऽपि बह्वीभिः सह रममाणोऽपि नेमं प्रसादं दत्तवान् । अन्यास्तु तत्तदवतारेषु लब्धसम्बन्धा अपि कुतः कस्माद्धेतोरिमं प्रसादं प्राप्नुयुः । अत्यर्थं दुर्लभं प्रसादस्वरूपमाविष्करोति ॥ रासोत्सव इति ॥ अस्य तिरस्कृतकोटिकन्दर्पविग्रहस्य भुजदण्डाभ्यां गृहीत आलिङ्गितः कण्ठस्तेन लब्धा आशिषो याभिस्तासां गोपीनां य उदगात् आविर्बभूव । तथाच ब्रह्मादीनामपि प्रार्थनया कदाचिदेकमेव रूपं गृह्णाति, न त्वनेकरूपाण्याविष्कृत्य यथोक्तरसाभिनिविष्टो यथोक्तं प्रसादं करोतीत्यहो व्रजवल्लवीनां तादृशप्रसादप्राप्त्युपायविधुराणामपि यथोक्तप्रसादलाभे भगवदिच्छैव कारणमिति भावः ॥ ६० ॥

एवं तासामुत्कर्षं वर्णयित्वा तत्पदमयोग्यत्वादप्रार्थयन् स्वयोग्यां पदवीं प्रार्थयति ।

आसामहो चरणरेणुजुषामहं स्यां

वृन्दावने किमपि गुल्मलतौषधीनाम् ॥
या दुस्त्यजं स्वजनमार्यपदं च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥ ६१ ॥

आसामिति ॥ वृन्दावनगुल्मलतौषधीनां मध्ये किमपि अहं स्याम् । तत्राप्यासां चरणरेणुजुषाम् । एतावतैव मम कृतार्थता भविष्यतीति भावः । एतावदप्यतिदुर्लभमिति बोधनाय तासां माहात्म्यमनुवदति । या दुःस्त्यजं स्वजनं पतिपुत्रादिकम् । आर्यपदं कीर्तिपदं पतिशुश्रूषणादिरूपं शिष्टमार्गं तत्साध्यं परलोकसुखं च हित्वा मुकुन्दस्य मोक्षप्रदस्य भगवतः पदवीं स्वरूपं भेजुः प्रापुः । यथा भगवान् श्रवणादिना मोक्षप्रदस्तथैता अपि संपन्ना इति द्योतनाय मुकुन्दपदवीमित्युक्तम् । सा च पदवी परमविलक्षणत्वात् केनापि न लब्धेत्याशयेनाह ॥ श्रुतिभिर्विमृग्यां (१) श्रुतिभिरपि परमात्मस्वरूपं दूरत एवान्विष्यते । यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेत्यादिश्रुतेः । तथाच श्रुतिभिरपि या विमृग्या तत्राऽन्येषां का गणनेति भावः ॥ ६१ ॥

किञ्चान्यदपि यत्ताभिर्लब्धं न तत् केनापीत्याह ।

या वै श्रियार्चितमजादिभिराप्तकामै
र्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम् ॥
कृष्णस्य तद्भगवतश्चरणारविन्दं
न्यस्तं स्तनेषु परिरभ्य जहुस्तदाधिम् ॥ ६२ ॥

---

(१) निगमद्रुमे मृगय मा वृन्दाविपिने द्रुमे द्रुमे पश्य ।
यद् व्रजवनिता भूत्वा श्रुतिभिरिहैवावलोकित ब्रह्म ॥

या इति ॥ या व्रजाङ्गनाः, रासगोष्ठ्यां भगवतस्तच्चरणारविन्दं परिरभ्य सम्यगालिङ्ग्य तस्याप्राप्तिजनितं मनस्तापं जहुः तत्यजुः । तदालिङ्गनं च तासां भगवदनुग्रहादेव सम्पन्नमित्याह ॥ न्यस्तमिति ॥ तद्विरहनत्प्राप्त्याशावर्जनादिजनितपरिश्रमादिना सन्तप्तेषु स्तनेषु भगवताऽनुग्रहात्तत्तापनिवृत्त्यर्थं न्यस्तम् । तदपि भगवतः समग्रैश्वर्यादिषड्गुणसम्पन्नस्य चरणन्यासमात्रेण भगवत्त्वापादकस्य, तत्रापि कृष्णस्य तदर्थमेव गृहीतकृष्णविग्रहस्य । कीदृशं तच्चरणारविन्दम् । सर्वोत्तमया श्रियाऽपि समर्च्चितमेव न तु यथेष्टं विनियुक्तम् । तथा ब्रह्मादिभिराप्तकामैरितरैश्च योगेश्वरैर्वशीकृतसर्वसिद्धिभिरपि यदात्मनि मनस्येव ध्यानादिना समर्च्चितम् । तथाचैवंविधं स्वपादारविन्दं भगवता तत्स्तनेषु न्यस्तमिति किं वक्तव्यं तासां माहात्म्यमित्यर्थः ॥ तत्रापि स्तनेष्विति बहुवचनाच्चरणारविन्दमित्येकवचनात् तापनिवृत्त्यर्थं परमत्वरयाऽसंख्यातस्तनेषु तत्स्थापनजनितपरिश्रमो भगवता न गणित इत्यहो भगवतस्तदनुग्राहकतावेश इति ध्वनितम् ॥ ६२ ॥

एवं तदीयं महत्त्वं प्रतिपाद्य तासां साक्षान्नमस्कारे स्वाधिकाराभावं मन्यमानस्तत्पादरेणुं नमस्करोति ।

वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ॥
यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥ ६३ ॥

वन्द इति ॥ तत्राप्येकमेव रेणुमभीक्ष्णशः पुनः पुनः कोटिकोटिवारं परमादरेण वन्दे । नचास्मदाद्यपेक्षया तत्पादरेणुमहत्त्वे विस्मयः कार्यो, यतः स्नानादिना पावनशक्तिमतीनां श्रीगङ्गाप्रमुखानां सरिद्वराणां पुलिनरेणुरपि वन्द्यते । नन्दव्रजयोषितस्तु गीतमात्रेण सर्वपावनशक्तिमत्य इत्याशयेनाह ॥ यासामिति ॥ हरेः

पापहारकस्य कथापेक्षयाऽपि उत्कृष्टं गीतं हरिकथासहितमूर्ध्वं गीतमिति वा । हरिकथारूपम् उच्चैर्गीतमिति वा । भुवनत्रयं समस्त-ब्रह्माण्डं पुनाति । तथाचैवम्भूतानां तासां पादरेणुवन्दनेनापि वयं कृतार्था इति भावः ॥ ६३ ॥

एवं यदर्थं भगवता प्रेषितस्तत्सर्वं संपाद्य पुनर्भगवत्सन्निधौ गन्तुं प्रवृत्त इत्याह ।

श्रीशुक उवाच ॥

अथ गोपीरनुज्ञाप्य यशोदां नन्दमेव च ॥
गोपानामन्त्र्य दाशार्हो यास्यन्नारुरुहे रथम् ॥ ६४ ॥

अथेति ॥ गोपीर्भगवत्प्रियाः, यशोदां तत्पूज्यां तन्मातरं तथा तत्पितरं श्रीनन्दरायं च । एवकारेण त्रयाणामेवात्र प्राधान्यं बोधितम् । अत एवानुज्ञाप्यानुज्ञां प्रार्थयित्वेत्युक्तम् । ततस्तन्मित्रादि-भूतान् । गोपानामन्त्र्य गच्छामीत्युक्त्वा, यास्यन्न तु विश्रामाद्यर्थं रथमारुरुहे । यतो दाशार्हेषु यादवभेदेषु मुख्यः । तत्र भगवदादि-भिराकाङ्क्षितसन्निधानः ॥ ६४ ॥

तद्गमनस्य कस्याप्यनभिलषितत्वात् पूर्वं केनाप्युपायनाद्या-ऽऽनयनोद्योगो न कृत इत्याशयेनाह ।

तं निर्गतं समासाद्य नानोपायनपाणयः ॥
नन्दादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः ॥ ६५ ॥

तमिति ॥ अकस्मात् तं निर्गतमेव समासाद्योपलभ्य नानो-पायनानि पाणौ येषां ते नन्दादयः, अनुरागेणाश्रुभिरन्धीकृतलो-चनाः सन्तः प्रकर्षेणोच्चैरवोचन् ॥ ६५ ॥

तत्प्रवचनमुदाहरति ।

मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः ॥
वाचोऽभिधायिनी नाम्नां कायस्तत्प्रह्वणादिषु ॥ ६६ ॥

मनस इति ॥ नोऽस्माकं मनसो वृत्तयः कृष्णस्य सदानन्दरूपस्य परमात्मनोऽस्मदर्थं गृहीतकृष्णावतारस्य पदाम्बुजमाश्रयो यासां तथाभूताः स्युः । तथाचास्मन्मनसो या वृत्तिरुदेतु सा तदाश्रयैवोदेतु, न त्वन्यालम्बना । तदतिरिक्तं वस्तुमात्रमस्मच्चित्ते कदापि मा प्रविशतु । तथा वाचोऽपि कृष्णस्य नाम्नामभिधायिन्यः स्युः । तथा कायस्तस्य श्रीकृष्णस्य वन्दनार्च्चनादिषु स्यात् । तथाच सर्वदा तद्गतकायवाङ्मानसाः स्यामेत्यस्मत्प्रार्थना श्रीकृष्णाग्रे वक्तव्येत्यर्थः ॥ ६६ ॥

एतत्फलं च नास्माकं स्वर्गादिमोक्षपर्यन्तं सुखमाकाङ्क्षितं, किन्तु तस्मिन् रतिरेवेत्याशयेनाहुः ।

कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया ॥
मङ्गलाचरितैर्दानै रतिर्नः कृष्ण ईश्वरे ॥ ६७ ॥

कर्मभिरिति ॥ कर्मभिर्निमित्तभूतैस्तत्तत्कर्मफलप्रदानायोद्भूता या फलप्रदातुरीश्वरस्येच्छा तया यत्र क्वापि भ्राम्यमाणानामस्माकम् । तथाच तत्तन्निवृत्तिरस्माभिः प्रार्थ्यते इति भावः ॥ मङ्गलभूतैराचरितैर्भगवदर्च्चनादिभिः, दानोपलक्षितैर्वर्णाश्रमोचितसमस्तकर्मभिश्चेह जन्मनि प्राचीनजन्मसु च कृतैः कृष्णरूप ईश्वरे नोऽस्माकं रतिरुत्तरोत्तरं वर्द्धमाना स्यादिति प्रर्थनारूपः संदेशोऽस्मदीयः स्वस्वामिसन्निधौ त्वया वक्तव्य इत्यर्थः ॥ ६७ ॥

इतः परं वक्तुमशक्तास्ते तूष्णीं स्थिता उद्धवश्च तावतैव तैः

संपूजितो मथुरां प्रागमादित्याह ।

एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप ॥
उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम् ॥ ६८ ॥

एवमिति ॥ एवमुक्तरीत्या गोपैर्भगवदीयैः सभाजितः पूजितः । पूजोपकरणमाह ॥ कृष्णभक्त्येति ॥ तत्कृता कृष्णभक्तिरेव तेन स्वस्य पूजोपकरणत्वेन गृहीता । तत उत्कृष्टायाः पूजाया अभावात् । यद्वा किमर्थं तैः सभाजित इत्यपेक्षायामाह ॥ कृष्णभक्त्येति ॥ न तु तेषामैश्वर्यादिकं किञ्चिदपेक्षितमासीत् । नन्वेवंविधभक्तानां सङ्गं विहाय किमिति मथुरां प्रति गतवानित्याशङ्क्याह ॥ कृष्णपालिताम् ॥ तथाच भगवत्सन्निधानार्थं तत्र गतवानिति भावः । किञ्च नराधिपानामप्याज्ञा नोलङ्घितुं शक्या, किं पुनर्ब्रह्माद्यधिपस्येति संबोधनाशयः ॥ ६८ ॥

तत्र गत्वा यत् कृतवाँस्तदाह ।

कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम् ॥
वसुदेवाय रामाय राज्ञे चोपायनान्यदात् ॥ ६९ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे उद्धवप्रतियाने
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥

कृष्णायेति ॥ प्रणिपत्य सम्यक् प्रणामं विधाय व्रजौकसां भक्त्युद्रेकं तत्प्रेषितं मुख्यमुपायनमाह ॥ निवेदितवान् ॥ वसुदेवाय पूर्वसख्यास्थितिख्यापनाय ॥ रामाय पूर्वस्नेहस्थितिबोधनाय । राज्ञे उग्रसेनायाऽऽदरज्ञापनाय । चकाराद् अक्रूरादिभ्यस्तद्दोषागणनासूचनाय तैः प्रेषितान्युपायनान्यदात् ॥ ६९ ॥

सकलनिगमबोध्यं सच्चिदानन्दरूपं
हरविधिहरिमुख्याभ्यर्च्यपादारविन्दम् ॥
व्रजयुवतिसुखार्थं स्वीकृतानेकलीलं
धनपतिरहमीशं नौमिगोपालबालम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यबालगोपालतीर्थ-
श्रीपादाशीर्वाददत्तवंशावतंसरामकुमारसूनु-
धनपतिसूरिकृतायां श्रीमद्भागवत-
गूढाऽर्थदीपिकायां दशमस्कन्धे
सप्तचत्वारिंशो-
ऽध्यायः॥४७॥

# विज्ञापनम् ।

## बनारससंस्कृतसीरीजनाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य कृते ।॥) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां कृते १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

### तत्र मुद्रिता ग्रन्थाः ।

| | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख०६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ६ (प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्डानि ३। द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्डानि ३) | ६ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

तत्त्वदीपनम। पञ्चपादिकाविवरणस्य व्याख्यानम् ) खं० ८ ८ ०
वेदान्तदीप: (श्रीभगवद्रामानुजाचार्यविरचित:) खण्डानि ३ ३ ०
टुप्टीका खण्डानि ४ ४ ०
पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽख्यवृत्ति स० १ ०
व्याकरण मिताक्षरा। श्रीमदन्नभट्टप्रणीता खण्डानि १० १० ०
रसमञ्जरी। व्यङ्ग्यार्थकौमुद्या प्रकाशेन च साहिता ख० ३ ३ ०
भेदधिकार: व्याख्यासहित: श्रीमदप्पयदीक्षितकृत उपक्रम-
पराक्रमसहित: खण्डे २ २ ०
बोधसारोनरहरिकृत: तच्छिष्यदिवाकरकृतटीकयास०ख० १० ०
ब्रह्मसूत्रदीपिका श्रीमच्छङ्करानन्दभगवद्भिर्विरचिता खण्ड २ २ ०
दैवज्ञकामधेनु: अर्थात् प्राचीनज्यौतिषग्रन्थ: खण्डानि ३ ३ ०
श्रीमदणुभाष्यम्। श्रीश्रीवल्लभाचार्यविरचितम्।
गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितभाष्यप्रकाशाख्य
व्याख्या समतम् खण्डानि १५ १५ ०
तत्त्वशेखर:। श्रीभगवल्लोकाचार्यप्रणीत:। तथा—तत्त्वत्रयचुलुक
संग्रह:। कुमारवेदान्ताचार्यश्रीमद्वरदगुरुविरचित:। १ ०
श्रीभाष्यवार्तिकम्। श्रीमद्रामानुजाचार्यविशिष्टाद्वैतसिद्धान्तप्र-
तिपादनपरम्। यतीन्द्रमतदीपिका च। श्रीगोविन्दाचार्यसूनु-
श्रीनिवासाचार्यकृता। सकलाचार्यमतसंग्रहश्च। खण्डे २ २ ०
गूढार्थदीपिका। श्रीमद्भागवतदशमस्कन्धस्थरासपञ्चाध्यायी-
व्याख्या। रसव्याख्या च। खण्डानि ३ ३ ०
आश्वलायनसूत्रप्रयोगदीपिका। श्रीविद्वद्वरमंचनाचार्यभट्ट-
विरचिता खण्डे २। २ ०
काव्यालंकारसूत्राणि। पण्डितवरवामनविरचितवृत्तिसमेतानि
कामधेनुसमाख्यव्याख्यासहितानि खण्डे २। २ ०
श्रुत्यन्तसुरद्रुम:। श्रीपुरुषोत्तमप्रसादविरचित: खण्डानि ३ ३ ०
चतुर्विंशतिमतसंग्रह:। श्रीभट्टोजिदीक्षितसंकलित: खण्डे २ २ ०
श्रीविद्वन्मण्डनम् श्रीविठ्ठलनाथदीक्षित विरचितम्। गोस्वामि श्री-
पुरुषोतमजीमहाराजविरचित सुवर्णसूत्राख्यव्याख्यासहितम् २ ०
सांख्यायनगृह्यसङ्ग्रह:। कौसुंवरवास्तव्यपण्डितवरवासुदेव
विरचित:। १ ०
गूढार्थदीपिका। श्रीमद्भागवतदशमस्कन्धीयभ्रमरगीतव्याख्या। १ ०